Govardhandas Pragji

॥ श्रीकृष्णाय नमः ॥

अखण्डभूमण्डलाचार्यवर्यश्रीमद्वल्लभाचार्यप्रतिपादित-
शुद्धाद्वैतब्रह्मवादप्रतिपादिका

# श्रीमद्गोपालपूर्वतापिन्युपनिषद्

गोस्वामिश्रीमदनिरुद्धाचार्यविरचितब्रह्मामृत-
भाष्येण पीयूषलहर्या च समुपबृंहिता ।

वेदान्तविशारदेन मीमांसक-
**हरिशङ्करशास्त्रिणा**
संशोध्य प्रकाशिता ।

संवत् १९८४

मूल्यम्-सपादमुद्रिका

“ आ पुस्तकनुं मुद्रण मदद वैष्णव रूपजी माधवजीना ट्रस्ट
मांथी तेमना ट्रस्टीओए आपेली आर्थिक सहायताथी थयुं छे. ”

॥ श्रीकृष्णाय नमः ॥

शुद्धाद्वैतब्रह्मवादिनिर्गुणभक्तिमार्गप्रवर्तक-अखण्डभूमण्डला-
चार्यवर्य-श्रीश्रीवल्लभाचार्यवंशावतंसशुद्धाद्वैतकेसरि-
शुद्धाद्वैतवाचस्पतिशुद्धाद्वैतभूषणशुद्धाद्वैतसहस्रांशुवे-
दान्तसुधाकरवेदान्तविद्यालङ्कारेत्युपपदालङ्कृत-
गोस्वामिश्रीमदनिरुद्धाचार्यविरचित-
ब्रह्मामृतभाष्येण पीयूषलहर्या
च समुपबृंहिता

# श्रीमद्गोपालपूर्वतापिन्युपनिषद् ।

सा च
वेदान्तविशारदेन मीमांसक-



## हरिशङ्करशास्त्रिणा

संशोध्य

मुम्बय्यां
मणिलाल इच्छाराम देसाई इत्येतेषां 'गुजराती' पत्रस्य
" न्यूस मुद्रणयन्त्रालये "
मुद्रापयित्वा प्रकाशिता ।

संवत् १९८४

" आ पुस्तकनुं मुद्रण सद्गत वैष्णव रुपशी माधवजीना ट्रस्ट
फंडमाथी तेमना ट्रस्टीओए आपेली आर्थिक सहायताथी थयुं छे."

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमद्वल्लभाधीश्वरा विजयन्तेतमाम् ॥

# अथेदं किञ्चित्प्रस्तूयते ।

श्रीमद्भगवद्वदनवैश्वानरावतारजगद्गुरुश्रीवल्लभाचार्यमहाप्रभुपूज्यपादपद्मपरागानुरक्तमानसानां भगवदीयानां चेतःसु सुमहानेवानन्दसन्दोहः सम्पत्स्यते "**ब्रह्मामृत**"भाष्येण "**पीयूषलहर्या**" च समुपबृंहिताया अस्याः श्रीमद्गोपालपूर्वतापिन्युपनिषदो दर्शनेन । ग्रन्थस्यास्य प्रणेतारोऽनेकनरपतिचूडामणिमरीचिचुम्बितचरणनखमयूखानां, निखिलशास्त्रकलावगाहगम्भीरबुद्धीनां, कविकुलकुवलयकलाधराणां, प्रक्षपिताशेषदुर्वादिविपक्षतया विगताशङ्कानां, सकलजगदभयदानयज्ञयूपानां, स्वपक्षरक्षणे दक्षानां, तात्कालिकसम्राट्समुपलब्धगोस्वामिबिरुदानां, श्रीमद्वागधीशवल्लभदेशिकेन्द्रद्वितीयकुमाराणां, तत्रभवतां श्रीश्रीविट्ठलनाथदीक्षितानां वंशावतंसाः, शुद्धाद्वैतकेसरिशुद्धाद्वैतवाचस्पतिशुद्धाद्वैतसहस्रांशुवेदान्तसुधाकरवेदान्तविद्यालङ्काराद्युपपदविभूषित**गोस्वामिश्रीमदनिरुद्धाचार्यचरणाः** । एते हि सम्प्रतिविराजमानानामखिलानामपि गोस्वामिनां मध्ये ग्रन्थकारत्वपदवीमद्वितीयतया विभूषयन्ति । तदेते साम्प्रतिकगोस्वामिवंशजोडुगणे सुधांशुतां बिभ्राणा विद्वज्जनमानसमाप्याययन्तः प्रतिमाविहीनया निजप्रतिभयाऽऽलोकयन्ति पुरुषपुङ्गवान्भागवतान्भक्तान्भगवदिच्छया भवान्तसम्भवान्दैवजीवान् । एतान् षट्दर्शनमरण्यानीमवगाहमानान्पण्डितपञ्चाननान्दृष्ट्वैव करिणीकुलकेलिकलाप्रवीणा अतिभयभ्रान्तनयना गलद्दानोद्रेकभ्रमदलिकदम्बाः "**करटिनः**" चीत्कृत्य गण्डमण्डलद्युतिभञ्जनभिया पलायन्ते मायोपाध्यविद्याव्यवहारपरमार्थादिविनिर्मितजवनिकाच्छादितेषु नागरीणामन्तःपुरेषु ।

अस्यां ब्रह्मामृतभाष्येण पीयूषलहर्या च समुपबृंहितायां श्रीमद्गोपालपूर्व-

तापिन्युपनिषदि, परमकाष्ठापन्नस्य, निरुपाधिकस्य, मन्त्रोपासनवैदिकतान्त्रिक-दीक्षार्चनादिविधिभिरस्पृष्टस्य, निजजनेषु स्वतन्त्रं रममाणस्य, सर्वविरुद्धधर्माधारस्य, शिवब्रह्मादिनिखिलामरगणैः सेव्यमानचरणकमलस्य, श्रीमद्गोपीजनवल्लभस्य, सकलश्रुतिप्रतिपादितरसात्मकस्वरूपस्यानन्दमयस्य; स्वरूपं, तदुपासनप्रकारं, दशार्णाष्टादशार्णादिमन्त्रान्प्रदर्श्य; व्रजवासिनीत्वेन प्राप्तप्रतिमानां, श्रुतिसीमन्तिनीनां यथावत्स्वरूपं च सर्वसन्देहनिरासपूर्वकं सम्यग्विविच्य प्रतिपादितम्। तस्यैव सकलश्रुतिप्रतिपादितस्य, तदङ्गीकारातिरिक्तसमस्तसाधनाप्राप्यस्य, परमकाष्ठापन्नस्य, श्रीकृष्णस्यानेकपरित्सरमितकालजातवियोगजनितविविधवृजिनतापोपतप्यमानानां, कलिकुहूनिबिडान्धकारे विलीनानां, शिवादिप्रचारितप्रतारकशास्त्रपरतन्त्रधियां, संसाराटवीमाहिण्ड्यमानानां, जीवानां स्वीयत्वेन वरणमेव परमपुरुषार्थस्वरूपम् । व्रजवरनितम्बिनीकदम्बकटाक्षकुवलयार्चितस्य, कालिन्दीसलिलकल्लोलसङ्गिमृदुतरपवनचलदलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितस्य, प्रसन्नमुखपङ्कजस्फुरितदन्तच्छटाविसर्पमधुरेऽधरे मुरलिकां दधानस्य, परावरप्रपञ्चनिरुपाधिकशेषिणः क्षराक्षरातीतस्य, भगवतः श्रीपुरुषोत्तमस्य माहात्म्यज्ञानपूर्वकसुदृढया, सर्वतोऽधिकस्नेहाख्ययाऽनन्यभक्त्यैकलभ्यत्वं च "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इत्यादिवाक्येन प्रतिपाद्यते । नहि भवितुमर्हति सेवामन्तरा कश्चित् व्यापारविशेषो भक्तिरिति । "चेतस्तत्प्रवणं सेवा" इति श्रीमदाचार्यचरणवाक्याच्चेतसो यशोदोत्सङ्गलालिते, श्रीकृष्णचन्द्रे प्रवणत्वमेव सेवापदार्थः । तत्प्रकारश्च श्रुतिगीताभागवतादिसकलशास्त्रोदीरितात्मनिवेदनपुरःसरमेव प्रदर्शितोऽत्र तत्रभवद्भिर्भाष्यकृद्भिः । आत्मनिवेदनेन सर्वदोषनिवृत्तिपूर्वकं पूर्णपुरुषोत्तमेन रसात्मकश्रीकृष्णेन सह सञ्जाते जीवस्य सम्बन्धे तत्सेवया यथाधिकारं फलप्राप्तिरिति राद्धान्तः । फलदानं तु भगवदायत्तम्, न जीवकृतिसाध्यं तत् "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः । इयं हि श्रुतिः कठवल्ल्यां श्वेताश्वतरोपनिषदि च वर्तते । उभयत्रापि ब्रह्मैवोपक्रान्तमित्ययमित्यनेन परम एवात्मोच्यते । "ऋतं च स्वाध्यायप्रवचने

च" इत्यनुवाकोदितमुख्यतपस्त्वस्य स्वाध्यायप्रवचनयोरेव प्रसिद्धेरादौ तन्निषेधपूर्वकमेव साधनलभ्यत्वं निषिध्यते । प्रवचनपदं वेदे रूढम्। तदत्र वाच्यतासम्बन्धेन तदुक्तसाधनानि लक्षयति । मेधा धारणावती बुद्धिः, साच पुरुषनिष्ठस्वाभाविकसाधनानि लक्षयति । एवंच, सः परमकाष्ठापन्नः पुरुषोत्तम एतैः साधनस्तोमैर्न लभ्य इत्यर्थः । किन्तु यमेव स्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकसम्बन्धेन कृपाबलेन वृणुते तादात्म्येन आत्मसात्करोति तेनैव लभ्यः । अस्यां श्रुतौ प्रवचनादिपदानि " प्राणभृत उपदधाति" इतिवत्सर्वसाधनोपलक्षकानि । उपलक्षकं नाम विशेष्यतानवच्छेदकत्वे सति व्यावर्तकम् । यथा " जटाभिस्तापसः " इति लोके जटा तापसत्वोपलक्षिका । वेदे च " प्राणभृत उपदधाति " इत्यत्र यथा "अयं पुरो भुवस्तस्य प्राणो भौवायनः" इत्युपधानकरणभूतैकमन्त्रगतप्राणशब्दभृत्त्वरूपलिङ्गसादृश्येन तत्सहितपठिता मन्त्राः प्राणभृत्त्वेनोपलक्ष्यन्ते इति प्राणभृत्त्वं तत्सहपठितमन्त्रोपलक्षकम् । तथाचात्र विशेष्यतानवच्छेदकत्वे सति व्यावर्तकेनाऽऽत्मीयत्वेन प्रवचनादिपदैर्जीवनिष्ठकृतित्वावच्छिन्नसाध्यत्वरूपलिङ्गकानि ऋतादीन्यन्यानि साधनान्युपलक्ष्यन्ते; तेन प्रवचनादिपदनां जीवनिष्ठकृतित्वावच्छिन्नसाधनत्वोपलक्षकत्वेन जीवत्वावच्छिन्नकृतिजन्यसाध्यसाधनैरप्राप्यत्वमेव । किन्तु ईश्वरत्वावच्छिन्नकृतिजन्यानुग्रहप्रकारकवरणत्वस्यैव साध्यत्वम् । यद्यपि भगवदिच्छाया इव भगवदनुग्रहोऽपि सर्वकालावच्छेदेन ज्ञातुमशक्यस्तथापि "अयं भगवदनुग्रहीतो महापुरुषानुगृहीतत्वात्प्रचेतोनलकूबरादिवत्" इतिकार्यलिङ्गानुमानेन ज्ञायते । यत्तु मन्त्रशास्त्रे भगवत उपासनप्राप्यत्वकथनाद्भगवान् मन्त्रोपासनादिविधिसम्बद्धस्तद्विहीतक्रियाफलत्वात्, यद्यद्विहितक्रियाफलं, तत्तद्विधिसम्बद्धम् "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिविहितक्रियाफलभूतस्वर्गादिवदित्यनुमानाच्च मन्त्रोपासनादिनाऽसम्बन्धसिद्धेरप्रामाणिकत्वमित्याहुः, तन्न; विहित क्रियाफलत्वेन स्वर्गादिवद्भगवति विधिसम्बन्धस्तु न शक्यवचनः । तथाहि—श्रुतिविरोधान्मन्त्रशास्त्ररूपस्मृतीनां तन्मूलकानुमानस्य चाप्रामाण्यमेव, भगवान् मन्त्रोपासनादिविध्यस-

म्बद्धो वरणातिरिक्तसाधनाप्राप्यत्वेन श्रावितत्वात् इति प्रत्यनुमानेन पूर्वोक्तस्य हेत्वाभासत्वं स्पष्टमेव । एवंच "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" "सर्वत्र प्रसिद्धोपदेशात्" "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इत्यादिश्रुतिस्मृतिन्यायसिद्धत्वात्तस्य परमकाष्ठापन्नस्य श्रीकृष्णस्यैव सर्वोपास्यसम्बन्धस्तु सर्वैरप्यङ्गीकार्यः । परन्तु तदुपास्यत्वं केन सम्बन्धेन केन रूपेणेत्याकाङ्क्षायां स सम्बन्धः "सर्वस्य वशी सर्वस्येशानः" इति श्रुतिविचारे सर्वेश्वरत्वेन सम्बन्धेन सर्वाविशिष्टत्वेन रूपेणेति भानमनुगृहीतानामेव भवतीति तत्रैव पर्यवसानम् । तथाच तादात्म्येन भगवन्निष्ठकृतित्वावच्छिन्नजन्यताकानुग्रहत्वावच्छिन्नप्रकारताकाङ्गीकृतित्वावच्छिन्नविशेष्यताकभक्तत्वावच्छिन्नैः स्वस्वानुग्रहानुरूपप्रणाड्यामन्त्रादिभिरुपास्य इति वक्तव्यम्, तत्त्वस्माकमपीष्टमेव, अतस्तद्व्यतिरिक्तरूपेणोद्देश्यत्वनिवारणमुपपाद्यते । अत्र "सर्वस्य वशी सर्वस्येशानः" इत्यादिश्रुतौ भगवतः परमकाष्ठापन्नस्य "रसो वै सः" इत्यादिश्रुतिप्रतिपाद्यस्यानन्दमात्रकरपादमुखोदरादिरूपस्य साकारस्य निरुपाधिकस्य श्रीगोपीजनवल्लभस्य श्रीकृष्णस्यैव सर्वेश्वरत्वमुक्तम् । "देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा । भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ।" इति स्मृत्या सर्वपदार्थैकभूतदेवादीन् सङ्गृह्य भगवद्भजनस्य तदिष्टसाधकत्वमुक्तम् । "को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैः ।" इत्यनेनानिष्टनिवारकत्वं "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम् ।" इत्यनेनाश्रयश्चोच्यते । तथाच जीवमात्रस्य भगवान्पतिरिति स्त्रियाः स्वपतिभजनवज्जीवमात्रस्य भगवद्भजनमिष्टमिष्टसाधनं चेत्यङ्गीकार्यम् । तच्च श्रवणादिरूपमेव ।

अस्त्वेवं सर्वाविशिष्टत्वं भगवतस्तद्भजनस्य च, तावता मन्त्रोपासनादिविध्युद्देश्यत्वं केन रूपेण वारितं भवतीत्याकाङ्क्षायां तद्रूपमुच्यते । मन्त्रशास्त्रे तु निगद्यते रामादिमन्त्रस्तदधिष्ठातृभजनं च कस्य चिन्मित्रं कस्य चिदरिः कस्य चित्सिद्धं कस्य चित्साध्यमित्यादि । एवमेव गोपालादिमन्त्रास्तदधिष्ठातृभज-

नानि चेति । एवं सति तदधिष्ठातृरूपस्य पुरुषोत्तमत्व उदाहृतप्रमाणनिचयेन सर्वोपास्यत्वेन मन्त्राधिष्ठातृरूपत्वेनाविशिष्टस्योपासनासाधनानामप्यविशिष्टत्वमुचितम् । तथासति रामगोपालादीनां मन्त्राधीनपुरुषोत्तमत्वे सिद्धसाध्यत्वाङ्गीकार्ये फलप्राप्तितदन्यथानुपपत्त्या तत्पुरुषोत्तमस्य सर्वोपास्यत्वहानिः । तथासति शास्त्रप्रामाण्यानुरोधेनापि विभूतिरूपोपासनमेव कल्प्यम् । तादृशस्य विशिष्टत्वेऽपि सामञ्जस्यमेव । तथाच मन्त्रशास्त्रीयविधावुद्देश्यत्वेन विभूतेरेव सम्बन्धो, नतु साक्षाद्भगवत इति विचारितरूपेणोद्देश्यत्वे निवृत्ते, तथा विध्यस्पर्शः सुस्थ एव । एतेन असम्बन्धः, अनुद्देश्यत्वात् । अनुद्देश्यस्तच्छास्त्राप्रतिपाद्यत्वात् । अप्रतिपाद्यः, तच्छास्त्रोक्तधर्मरहितत्वात् तद्विरुद्धधर्मकत्वाच्च । यदेवं तदेवम् । वैष्णवशास्त्रप्रतिपादितशिववत् इत्यपि प्रत्यनुमानं बोधितम् । तथाच भक्तिविरुद्धधर्मकत्वादुपासनाया अपि भक्तिभिन्नत्वं साधितम् । नचात्र गोपालपूर्वतापिन्युक्तमन्त्रस्यापि तथात्वमिति वाच्यम् । तस्य भक्तिमार्गीयत्वात्, सर्वसमर्पणपूर्वकतदाचरणत्वात्, भाष्यकृद्भिस्तस्य भक्तिमार्गीयत्वस्य सुव्यक्तमुक्तत्वाच्च ।

भवतु नाम गोपालपूर्वतापिन्युपनिषदुक्तमन्त्रस्य भक्तिमार्गीयत्वमेन्यषां च मन्त्रशास्त्रोक्तानां पुरुषोत्तमास्पृष्टत्वम्, तथापि भक्तिमार्गीयमन्त्राधिष्ठातुः पुरुषोत्तमस्यात्मनिवेदनापरपर्यायब्रह्मसम्बन्धपूर्वकमेवसेव्यत्वं यदुच्यते तत्कथं सम्भवति ? ब्रह्मसम्बन्धो नाम सर्वस्मिन् भगवत्स्वामिकत्वरूपः सम्बन्धः । तत्र "दारान्, सुतान्, गृहान्, प्राणान् यत्परस्मै निवेदनम्" इत्यादिवाक्यैर्जीवेन सर्वस्वनिवेदनं कर्तव्यमित्याशयः । तदपि न सम्भवति, गृहादिप्रतीतौ जीवाविद्यैव हेतुः । तथाच विचित्रपरिणामशीलयाऽविद्ययैव विचित्रं जगत् प्रतीयते । युक्तं चैतत् कार्यस्य तुच्छत्वेन तत्कारणेनापि तादृशेनैव भवितव्यम्, कारणसजातीयत्वात् कार्यस्य । यथा च मुखसम्बन्धमात्रेण दर्पणादिकं बिम्बप्रतिबिम्बभेदनिमित्तं, तथा चिद्रूपब्रह्मसम्बन्धमात्रेण तद्भेदनिमित्तं सा । तत्कृततदध्यासवशात्स्वस्मिन्नज्ञत्वं, कर्तृत्वभोक्तृत्वे, मन्यमानो विधिनियोज्यादिभाव मनुते । ततः शमदमादिभिर्गुरूपसत्तितदुपदेशश्र-

वणमनननिदिध्यासनैश्चाविद्याधिष्ठानरूपस्वात्मनोऽद्वैतकूटस्थचिदेकरसत्वलक्षण-स्वरूपज्ञानेनाज्ञाननिवृत्त्या तत्कार्यरूपप्रपञ्चस्यापि निवृत्तेः "ब्रह्मवेद ब्रह्मैव भवति" इत्यादिश्रुतिनिरूपितो मोक्षः सम्पद्यते। जीवस्य अविद्यायां प्रतिबिम्बितत्वमेवाङ्गीकार्यम्। प्रतिबिम्बितस्य मिथ्यात्वात्कथं तत्कर्तृकं गृहादीनां निवेदनं सम्भवति ?

अत्रेदं विचार्यते—जीवस्य ब्रह्मप्रतिबिम्बपक्षो युज्यते नवेति। अविद्यायां ब्रह्मप्रतिबिम्बो जीवः। अविद्यायामित्याधारसप्तमी। आधारत्वं वैज्ञानिकं प्रतीत्युभयसम्बद्धानुविधायित्वार्थकम्। बिम्बपदेनैव ब्रह्मलाभेऽपि ब्रह्मैव जीव-इत्यभेदध्वननाय ब्रह्मपदम्, बिम्बत्वस्याननुगतत्वात् प्रतियोग्यप्रापकं बिम्ब-पदम्। प्रतीतियोग्यत्वमात्रस्य बिम्बघटादिसाधारणत्वात्सत्यन्तम्। तावन्मात्र-दर्पणरेखायां वा चाकचक्यादिमत्यां शुक्तिस्वच्छमौक्तिकादौ च सत्त्वासम्मुख-स्थितार्थानुविधायित्वनिवेशः। स्वसम्मुखस्थितत्वे अनुकारिणि मैत्रेऽतिव्याप्तेः सत्यन्तात्पार्थक्यम्। तादृक्ता सन्निकृष्टे पदार्थे पुरुषान्तरेणाप्यप्रतीते प्रतिबिम्बव्यवहाराभावात्तत्प्रतीतियोग्यत्वम्।

अत्र यदि प्रतीतिर्लौकिकचाक्षुषम्, यदि वा प्रतिहतचक्षुष्टं प्रतिबिम्बनम्, उभयथापि ब्रह्मणो नीरूपत्वात्प्रतिबिम्बायोगः, अतो नायं पक्षो युक्तिसहः। अत्र प्रतिघातनियमाभावात्तत्तदुपाधिनिष्ठत्वेन संयोगानामेव तेजोविशेषप्रति-घातकत्वात्पार्थिवस्य दर्पणस्य जलादेर्वा प्रतिबिम्बनिरूपकत्वानुपपत्तेः, प्रतिघाते वा दर्पणादेरप्यग्रहणप्रसङ्गाच्च प्रथममेव लक्षणम्। नन्वेवम्, "उपाधिकालरूपं हि तादृशं प्रतिबिम्बते" इतिसिद्धान्तः कथमुपपद्यताम्, तद्रूपस्य विवादास्पद-त्वात्, कालस्य नीरूपत्वात्, ब्रह्मणश्च सर्वगतत्वात्, प्रतिबिम्बोपयोगिस्वच्छत्वे मानाभावाच्चेति चेन्न, नीरूपस्यापि कालस्य षडिन्द्रियवेद्यत्वाभ्युपगमात्, प्रतिबिम्बितस्य रूपस्येव, आधिदैविके वा रूपाभ्युपगमान्न दोषः। ब्रह्मणश्च परैः कालन्यायेन तथात्वानभ्युपगमात्। आकाशस्येव तलमालिन्यादेर्ग्राहकत्वे ब्रह्मणोऽपि श्यामरूपग्राहकत्वमितिनोक्तसिद्धान्तविरोधः। ननु सत्त्वतत्त्वा-

न्मायान्तःकरणान्यतरोपाधेः स्वच्छत्वाङ्गीकारान्नैतद्दोषोद्भावनं युक्तमिति चेन्न, गुणविभागस्य सादितया तदुपाधिकजीवस्य सादित्वापत्तेः । अनादिप्रतिबिम्बाङ्गीकाराच्च नेष्टापत्तिः कर्तुं शक्यते । अविभक्तगुणत्रयविशिष्टोपाधेस्तु स्वच्छत्वे गुणान्तरेष्वविशेषान्मलिनप्रतिबिम्बे जीवान्तरतापत्तेः प्रतिशरीरमेकैकजीवाङ्गीकारा अनिष्टापत्तिः । दृष्टानुसारिणी हि कल्पनोचिता । अन्यथा वायुदारुणोरपि बिम्बत्वप्रतिबिम्बाश्रयत्वप्रसङ्गात् । ननु दर्पणादावाकाशप्रतिबिम्बो दृश्यते, न, तावद्देशीयप्रभामण्डलस्यैव रूपवत्त्वेन प्रतीतेः । योग्यत्वेन प्रतिबिम्बांश एव प्रतिबिम्बत्वस्वीकारात् ।

अत्र विद्यारण्यानुसारिणः—कथं हि ब्रह्मात्मकप्रतिबिम्बविचारेऽपि प्रमाविषयतोपादीयते, तेनानुभूयमानाकाशविषयतामपलप्य प्रमाविषयताप्रमयाऽभिलप्यतेतमाम् । भ्रमाणां तु सर्वतः सुघाटत्वात्प्रमात्मकचाक्षुषसामग्रीमनमपेक्ष्यैवाकाशादेर्विषयत्वोपपत्तेः । नचैवमुपनीतविषयतापत्तिः प्रतिबिम्बस्येति वाच्यम्, पश्यामीति प्रतीतिरस्माकमुपपादनीया, सा च शुक्तिरजतादेरिव लौकिकालौकिकोभयविषयाणां साधारणीति नानुपपन्नं किञ्चित् । तथाचाकाशे समण्डलश्चन्द्रः प्रभामण्डलं चेत्यपि प्रत्ययात्तद्विशिष्टस्य दर्पणादौ प्रतिबिम्बप्रतीतेराधारतांशे भ्रमत्वेन सर्वमत एव प्रतिबिम्बस्य मिथ्यात्वमनुमन्यन्ते ।

अत्र वृन्दारण्यानुसारिणः—न वयमाकाशप्रतिबिम्बे विप्रतिपद्यामहे, अस्य विपिनसरसीषु रासस्सुधाकरकररञ्जितरमणीयतराकाशप्रतिबिम्बदर्शनात्; परन्तु प्रतिबिम्बानां मिथ्यात्वे विवदामहे । कथं नु नाम विभूतयो रसशास्त्रसिद्धपदार्था वा मिथ्यात्वायावकल्पेरन् । "आध्यानाय प्रयोजनाभावात्" इत्यधिकरणे "ममैवांशः" इति प्रतिबिम्बरूपभक्तजीवस्वरूपस्यैक्याभिप्रायेण "अहमात्मा" इति विभूत्यन्तर्निवेशात्तेषां साक्षात्फलाभिचारेणान्तरङ्गसाधनानां स्वरूपविषयतान्तःपातात्तत्सम्बन्ध्यलौकिकरासदर्शनप्रस्तावाच्च शिष्टः संसारोऽनाविर्भूतसर्वात्मभावपर्यन्तो हिरण्मयपुरुषास्तानाच्च सर्वत्र भगवत्प्रतिबिम्बः सर्वस्याधिदैविकम् । वृत्त्यवच्छिन्नजीवास्तूपाधयोऽनन्ता भवतां पर्यवसिताः ।

न यावत् सर्वात्मभावोदयस्तेषां तावत्संसारिणो भूत्वा न वेदवाक्यार्थं समन्वते, तेषामिदं साधनमुपदिष्टं श्रीकृष्णद्वैपायनेन । "प्रतिबिम्बरूपमेकं भगवतः" इति **श्रीमदाचार्यचरणाः** । अत एव प्रतिबिम्बो विषयताविशेष इत्यभिप्रायेणासम्मुखेत्यादिकमसम्मुखानां प्रतिबिम्बानामुपात्तम् । तस्मात्प्रतिबिम्बपक्षो न युक्तिसहः ।

न चास्तिवायुदारुणोः प्रतिबिम्बः । न तु प्रत्यक्षम्, रूपाभावादिति वाच्यम् अरूपिणः प्रतिबिम्बस्वीकारे गौरवान्मानाभावाच्च । ननु नीरूपस्य रूपस्य प्रतिबिम्बान्नायं नियमः, सत्यम्, रूपसमवायोस्तु प्रतिबिम्बे प्रयोजकः । रूपस्य स्वप्रतिबिम्बे त्विष्टापत्तिरेवास्तु, धर्मपुरस्कारेणैव धर्मिबोधात् । प्रतिबिम्बिताम्रतरुचलनादि तु नैव प्रतिबिम्बते, क्रियायास्त्वप्रत्यक्षत्वात् । किन्तु-देशान्तरे रूपोपलम्भेन क्रियायामनुमीयते । अथवा दृग्विषयस्यैव प्रतिबिम्ब इति तात्पर्यम् । तेन संयोगादीनामपि प्रतिबिम्बसिद्धिः । किञ्च यत्र यदस्ति, तत्र तन्न प्रतिबिम्बते, दर्पणरेखावत् । तथाच सर्वगतस्य ब्रह्मणोऽविद्यायामपि सर्वगतायां सत्त्वेन कथं प्रतिबिम्बः स्यात् । न च संयोगसम्बन्धेन तत्र वर्तमानत्वमप्रतिबिम्बे प्रयोजकम्, एतयोश्च न संयोगो, विभुत्वादतो नानुपपत्तिरिति वाच्यम् । संयुक्तस्यापि प्रभामण्डलस्य तथा प्रतीतेः । न च यदंशे न तथेति वाच्यम् । विसिनीसूत्रमात्रान्तरिताङ्गुलीतलभागस्थप्रभाया अपि दर्पणे प्रतिबिम्बात् । एवंच व्याप्यवृत्तित्वमेवाप्रतिबिम्बप्रयोजकम् । संयोगस्य प्रभायाश्चाव्याप्यवृतित्वात्प्रतिबिम्बः । प्रभाया गुणत्वेन तत्रापि द्रव्यसत्त्वे किरणसत्त्वेन तत्संयोगोऽपि अस्तीति संयोगस्यैव प्रयोजकत्वेऽपि न क्षतिः । ननु "गुणाद्वा लोकवत्" इति सूत्रे प्रभाया द्रव्याधिकदेशवृत्तित्वाङ्गीकाराद्द्रव्यस्य तत्राभावाद्व्याप्यवृत्तित्वं नाप्रतिबिम्बे प्रयोजकम् । तद्वृत्तित्वे सति तत्स्वच्छत्वाच्छादकत्वमेव तथेति चेदुच्यते—"द्वा सुपर्णा सयुजा" "गुहां प्रविष्टौ परमे परार्द्धे" "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इत्यादिश्रुतिन्यायनिर्णीता जीवपरमात्मनोरेकत्रेतरेतरविलक्षणा स्थितिर्बिम्बप्रतिबिम्बपक्षे न सङ्गच्छते ।

तयोर्लोके तथाऽदर्शनात् । अत्र "द्वासुपर्णा" इतिश्रुतौ दित्वादेरेकतूष्णीकत्वाऽपरक्रिये उक्ते । द्वितीयस्यां छायातपत्वोक्तावपि व्यासेनात्मानाविविनिर्णीतम् ।

अत्र परेषां षण्मतानि—

(१) अनादिरनिर्वाच्या मूलभूतप्रकृतिर्माया चिन्मात्रसम्बन्धिनी तस्यां चित्प्रतिबिम्ब ईशः, तस्या एव परिच्छिन्नानन्तप्रदेशेषु आवरणविक्षेपशक्तिमत्स्वविद्याख्येषु चित्प्रबिम्बो जीव इत्येकम् ।

(२) सैव प्रकृतिः शुद्धसत्त्वप्रधाना माया, तत्र चित्प्रतिबिम्ब ईशः । मलिनसत्त्वाविद्यायां चित्प्रतिबिम्बो जीव इति द्वितीयम् ।

(३) ननु सत्त्वस्याक्रियत्वमितिचेद्विक्षेपशक्तौ मायाया आवरणशक्तावविद्यायाः प्रतिबिम्बाभासो जीव इतितृतीयम् ।

त्रिष्वपि ईश एव, तस्यैव रूपान्तरं वा परमात्मेति । तत्र दर्पणरूपाविद्यासम्बन्धाभावः स्फुटः । एवं—

(४) अविद्यायां चित्प्रतिबिम्ब ईशः । अन्तःकरणे जीव इति तुरीयेऽपि ईशस्य सर्वज्ञत्वादिनिर्वाहाय तूलाविद्या तत्र नेत्यभ्युपेयम् ।

(५) घटाकाशजलाकाशमहाकाशमेघाकाशवत्कूटस्थजीवब्रह्मेशा इति चिचातुर्विध्यमते ब्रह्माश्रितमायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्ब ईशः, स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यस्थिते मायाकल्पितेऽन्तःकरणे प्रतिबिम्बो जीव इतिपञ्चमम् । अत्रापि ईशपरमात्मनोरैक्यात्तथा ।

(६) अन्तःकरणावच्छिन्ना चिदीशो बिम्बभूतः, अज्ञाने तत्प्रतिबिम्बो जीवः, अज्ञानपरिणामोन्तःकरणं, जीवस्य विशेषाभिव्यक्तिस्थानमितिषष्ठम् । अत्रापि तथेति दिक् ।

ननु न प्रतिबिम्बवैयधिकरण्यम्, बिम्बस्यैव प्रतिबिम्बत्वात्, प्रतिबिम्बात्मकरूपान्तरे तदुपाधिनिष्ठे मानाभावात्, इति चेत्सत्यम्, यन्मते प्रतिबिम्बो न रूपान्तरं, तन्मतेऽपि बिम्बत्वविषयताद्वयमवश्यमङ्गीकार्यम्,

अन्यथा बिम्बप्रतिबिम्बव्यवहारभेदानुपपत्तेः, तत्रोपाधिव्यद्व्यविषयताद्वये एकस्या उपाधिसन्निहितदेशोऽवच्छेदकोऽपरस्यास्तूपाधिरिति व्यवस्थायामुपाधिदेशस्यासंसृष्टस्यापि सांमुख्यमेव सम्बन्धो वाच्यः, असम्बद्धस्यानवच्छेदकत्वात्, प्रत्यगात्मनश्च कथं नाम सान्निध्यम्। अस्मन्मते तु इष्टापत्तिः, "रूपं रूपं प्रतिरूपो बभूव" इति ब्रह्मणः सर्वानुविधायित्वलक्षणस्वरूपसम्बन्धाभ्युपगमात्।

यत्तु मधुसूदनमुनयः—"रूपं रूपं प्रतिरूपो बभूव" इतिश्रुतिरेव नीरूपस्य प्रतिबिम्बे मानमित्याहुः, तन्न, "इदं वै दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचद्रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूपईयते युक्ताह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्" इति सम्पूर्णा श्रुतिः। "इयं पृथिवी सर्वेषां भूतानाम्" इत्यारभ्य "ब्रह्म सर्वानुभूरित्यनुशासनम्" इत्यन्तं बृहदारण्यकस्थं पञ्चमब्राह्मणम्। अत्रोपक्रमे इयं पृथिवीतिश्रुतौ "योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्" इति ब्रह्मणः सर्वात्मकत्वमुक्तम्। उपसंहारे च "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूः" इत्यत्र तदेतद्ब्रह्मेति जडस्य अयमात्मा ब्रह्मेति जीवानां च ब्रह्मत्वबोधनेन ब्राह्मणः सर्वरूपता प्रतिपादिता; इत्थमुपक्रमोपसंहाराभ्यामिह ब्रह्मप्रकरणावगमात् न मध्ये "रूपं रूपं" इत्यस्य जीवप्रतिबिम्बत्वबोधकता युक्तेति तत्त्वम्।

तर्ह्यस्तु कौन्तेयस्य राधेयत्ववदविकृतस्य ब्रह्मण एव स्वाविद्यया जीवभावः। तथाच स्वाविद्यया भ्रान्तं संसरद्ब्रह्मैव जीवः। इदंच सूत्रकारस्यापि सम्मतम्। "अवस्थितेरिति काशकृत्स्नः" इतिसूत्रे तथानिर्णीतत्वात्। एवं सति "तत्त्वमसि" "अयमात्मा ब्रह्म विज्ञानमयः" इत्यादिवाक्यान्यपि सङ्गमिष्यन्ति, इति चेत्, न, अविद्याया अनादित्वोपगमाद्ब्रह्मणः सर्वस्याविकृतस्य जीवभावे ब्रह्मापलापापत्तेः। अतोऽवस्थान्तरमङ्गीकुर्वाणेनापि प्रदेशभेदे-

नैवाङ्गीकार्यम् । तथासति पूर्वोक्तदूषणापत्तेः । अथाऽवास्तवत्वाज्जीवभावस्योपदेशेन तन्निवृत्तौ न ब्रह्मापलाप इति चेन्न, उपदेशजीवभावनिवृत्तेरेव दुर्लभत्वात् । स्वाऽविद्यया जीवभावमापन्नस्यैव सर्वप्रपञ्चकल्पकत्वेनोपदेशवाक्यस्यापि तत्कल्पितत्वे तेन तदज्ञाननिवृत्तिदौर्लभ्यात् । स्वाज्ञानकल्पितरजतादेः स्ववाक्येन निवृत्त्यदर्शनात् । तदनिवृत्तौ च जीवभावानिवृत्तेः । वाक्यस्योक्तरूपत्वात्तदुक्तब्रह्मस्वरूपेऽप्यनाश्वासप्रसङ्गेन सर्वविप्लवापत्तेश्च ।

ननु अंशत्ववादोप्यरुचिरः । अपरिच्छिन्नस्य ब्रह्मणोंऽशस्यैवासम्भवात् । ब्रह्म प्रति जीवस्यांशत्वं न तावदारम्भकत्वम्, ब्रह्मणोऽनादित्वात् । नापि खण्डत्वम्, अच्छेद्यत्वात् । नवा समुदायित्वम्, समुदायस्य समुदाय्यनन्यत्वेन व्यवहारदशायामपि संसार्यन्यशुद्धब्रह्मभावापातात् । नच भिन्नाभिन्नद्रव्यत्वम्, अनङ्गीकारात् । नापि घटं प्रति खण्डघटस्येव प्रदेशत्वम्, निष्प्रदेशब्रह्म प्रति कल्पनां विना तदयोगात्, इति चेन्न, "ब्रह्मदासा ब्रह्मदाशा ब्रह्मेमे कितवा उत" "पादोस्य विश्वाभूतानि" "ममैवांशो जीवलोके जीवभूतः सनातनः" "अंशो नानाव्यपदेशादन्यथा दाशकितवादित्वमधीयत एके" "एकस्यैव ममांशस्य जीवस्य" इत्यादिश्रुतिस्मृतिन्यायश्रीभागवतप्रतिपादित्वात् । नच श्रुत्यादिष्वभेदव्यपदेशस्योदाहृतत्वादौपाधिकांशत्वं युज्यते इति वाच्यम् । उपाधिपक्षस्य विद्वन्मण्डनादिषु दूषितत्वात् । अतः सकलशास्त्रप्रतिपादित्वाज्जीवानां सहजांशत्वमेव । नन्वंशत्वेऽपि जीवानां तदात्मकत्वेनान्यूनत्वाद्भजनानुपपत्तिरिति चेन्न, बहुस्यामिति श्रुतेः क्रीडार्थभाविभावान्नानुपपत्तिः काचित् । एवंच जीवानां ब्रह्मांशत्वाद्धर्मदासत्वे ब्रह्मसम्बन्धापरपर्य्यायसर्वस्वनिवेदनद्वारैव भवति सेवाधिकारिता ।

भवतु नाम जीवस्यांशत्वं सहजदासत्वं च, परन्तु ब्रह्मसम्बन्धं विना कथं सेवानधिकारित्वम् ? जीवानां सदोषत्वात्, ब्रह्मसम्बन्धकरणोत्तरमेव दोषनिवृत्तेः श्रीमदाचार्यचरणप्रतिपादितत्वाच्च । ब्रह्मसम्बन्धत्वं नाम सर्वस्मिन् भगवत्स्वामिकत्वरूपः सम्बन्धः । ननु पूजामार्गे पूजार्थं दोषनिराकरणार्थं बहव

एव प्रकारा उक्ताः, तान्विहाय शुद्धभक्तिमार्गे भगवन्निवेदनमात्रस्यैव सेवार्थं सर्वदोषनिवर्तकत्वं कथमिति चेत्, उच्यते, " अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे " इति वचनात्। तथाच " भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् " इत्यादिवचनतो भक्तिमार्गः स्वत एव सर्वदोषनिवर्तकः। अथच, भक्तिमार्गे सेव्यः पुरुषोत्तम एव, नतु तदंशस्तद्विभूतिरूपं वा। स एव सर्वात्मना सर्वदोषरहितो निर्दुष्टपूर्णगुणविग्रहः, अतस्तन्निवेदनेन तत्सम्बन्धे सति सर्वात्मना सर्वदोषनिवृत्तौ किं वाच्यम् ? अतः पञ्चमस्कन्धे भगवद्भक्तस्वरूपनिरूपणे " भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः " इति तेषामुत्कर्षावधिरुक्तः। यत्र भगवदीयत्वमात्रस्यैव सर्वपुरुषार्थतुच्छीकरणत्वम्, तत्र भगवन्निवेदनस्य सर्वदोषनिवर्तकत्वं कैमुतिकन्यायसिद्धमेव। पूजायास्तु कर्ममार्गान्तःपातित्वान्नभक्तित्वम्। कर्ममार्गस्य भगवत्सम्बन्धाभावात्सदोषत्वमपि। ननु भगवत्पूजाविधानान्निर्दोषत्वमिति चेत्सत्यम्, पूजामार्गे पूज्यस्य विभूतिरूपत्वेन शुद्धपुरुषोत्तमत्वाभावान्न सर्वात्मना सर्वदोषनिवर्तकत्वम्। तत्रावाहनादि विसर्जनान्तानामुपचाराणां केवलमन्त्राद्यधीनत्वात्पुरुषोत्तमविभूतिरूपत्वमेव। पुरुषोत्तमस्तु "नाहं वेदैर्न तपसा" "भक्त्याहमेकया ग्राह्यः" इत्यादिवचनैः केवलमनन्यभक्त्यधीन एव। नतु तदतिरिक्तमन्त्राद्यधीनोऽपीति महदेव वैलक्षण्यम्। किञ्च, पूजामार्गे पूज्यदेवताया मोहनोच्चाटनादिलौकिककार्यविनियोगोऽपि श्रूयते। पूज्यदेवतामन्त्रस्यारित्वादयो धर्माश्च श्रूयन्ते। न हि सर्वनियामकस्य सर्वेश्वरस्य ब्रह्मशिवादिसर्वोपास्यस्यानन्दमात्रकरपादमुखोदरादिरूपस्य पुरुषोत्तमस्य सेवकेष्वरित्वादयो धर्माः सम्भवन्ति। अतो गीतायामपि "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति। तथा श्रीभागवते प्रह्लादवाक्यम् "देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा। भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम्।" इति वचनात्किमतोऽधिकं भक्तिमार्गस्य च तारतम्यं वाच्यमिति दिक्।

अत्र कश्चिद्देवर्षिकल्पः—अस्मिन् पुष्टिभक्तिमार्गे द्विधा भवति ब्रह्मसम्बन्धः, साधनसम्बन्धः, फलसम्बन्धश्च । श्रीमद्धरिरायाणां मते साधनसम्बन्धोऽक्षरसम्बन्धः, फलसम्बन्धस्तु श्रीकृष्णसम्बध इति प्रतिभाति । साधनसम्बन्धस्याक्षरसम्बन्ध एवौचित्यम्, श्रीमदाचार्यचरणानामपि तथैवाभिप्रेतमिति ज्ञायते । अत एव "ब्रह्मसम्बन्धकरणात्" इत्यवोचन् । यदि हि साधनसम्बन्धोऽक्षरसम्बन्धः श्रीमदाचार्यचरणानामनभिप्रेयात्, तदा "कृष्णसम्बन्ध करणात्" इति वदेयुः, न तत्तथा, अस्य साधनसम्बन्धत्वात्, नहि श्रीमदाचार्यचरणाः श्रुतिविरुद्धमक्षरमपि वदन्ति, "ब्रह्मविदाप्नोति परम्" इत्यत्र अक्षरब्रह्मणः साधनत्वं श्रीकृष्णस्य च फलत्वं स्फुटमेव । एवमेव समाधिभाषासु ( श्रीमद्भागवते ) निरोधप्रकरणस्य पञ्चविंशातितमेऽध्याये "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः" इत्यादिभिर्वाक्यैः साधनरूपस्याक्षरस्यैव प्रदिपादितत्वात्, षड्विंशतितमाध्यायेऽपि श्रीमदाचार्यचरणैः "ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजने" इत्यत्राक्षरसम्बन्धस्य स्पष्टमेवाज्ञप्तत्वात् । तेन च श्रीमदाचार्यचरणानामपि साधनसम्बन्धोऽक्षरसम्बन्ध इति सम्मतम् । सदाचारोऽपि तादृश एव, यदा हि ब्रह्मसम्बधो भवति तदा तुलसीदलानि चरणारविन्दे समर्प्यन्ते । प्रभोश्चैकं पदं मर्यादात्मकम् अन्यदक्षरात्मकं च । तुलसीदलानां चरणारविन्दे समर्पणात् अक्षरसम्बन्धो भवति अयं हि सदाचारश्चिरप्रवृत्तः । अतः सदाचारप्रामाण्यादक्षरससम्बन्ध एवेति सिद्ध्यति । चरणस्य भगवतश्चानन्यसम्बन्धात् श्रीकृष्णेन सममपि सम्बन्ध इत्यनेनैव सिद्ध्यति । गोस्वामिश्रीव्रजाभरणदीक्षिता अपि स्वविनिर्मितगद्यटीकायां "श्रीकृष्णसम्बन्धस्तु अग्रे भावीति सिद्धान्तरहस्यकारिकासु व्याख्याने श्रीहरिरायचरणैर्निरूपितम् " इत्यवोचन्, तस्मादयं प्रथमः सम्बन्धोऽक्षरसम्बध एव । किञ्च अग्रे यो भावी फलसम्बन्धः स च श्रीकृष्णसम्बन्ध एवेति विभावनीयम् ।

नहि केवलमेकयैव कारिकया श्रीरिहररायचरणैरक्षरसम्बन्धः प्रतिपा-

दितः, किन्तु बहुत्र तथानिरूपितम् । तत्सिद्धये च बहूनां दृष्टान्तानामपि सङ्ग्रहः । ताश्च कारिकाः प्रदर्श्यन्तेऽत्रैव । तथाहि—"स्वरूपेण समुद्धारस्तथा भक्त्यापि चैव हि । व्यवस्था तत्र मन्तव्याऽवतारानवतारतः" "श्रावणः पुष्टिमार्गीयश्चातुर्मास्यगतत्वतः । विष्णुसम्बन्धिसम्बन्धात्सम्बन्धख्यापको यतः ॥" "बोध्यते तेन पुष्टिर्हि सम्बन्धवरणात्मिका" "आदौ सम्बन्धकरणं कन्ययेव स्वयंवरे । स्वस्य सर्वपदार्थानां मनसा तेन योजनम् ॥" "सम्बन्धश्चापि निर्दोषस्तथा सर्वसमः स्मृतः । बह्वेरिवेति बोधाय प्रोक्तं ब्रह्मपदं पुनः, 'निर्दोषं हि समं ब्रह्मे' त्यत्रोक्तं तत्तथाविधम् ॥" स्यात्प्रयुक्ते कृष्णपदे विषमत्वं गुणाहितिः । सम्बन्धे तादृशापेक्षा नास्ति दोषनिवारणात् ॥" "दोषमात्रनिवृत्त्यर्थं ब्रह्मसम्बन्ध उच्यते । गुणाधायकसम्बन्धः फलसामयिको मतः" "तस्मिन्वाच्ये कृष्णपदं वाच्यं कृष्णः फलात्मकः । तत्सम्बन्धे स्वतः सिद्धे फलसंसिद्धिसम्भवात् । अपरा कृष्णसेवादिकृतिर्वैयर्थ्यमाप्नुयात् । अतः साधनसम्बन्धो विवाह इव लौकिके ।" "विषमश्च हरिः कृष्णो न यायात्समतां यतः । हेतुसम्बन्धसम्बन्धात्कृष्णः साधनतां गतः ॥" एवं श्रीहरिरायचरणानां मते प्रथमः सम्बन्धोऽक्षरसम्बन्ध इति सिद्धम् । श्रीमदाचार्यचरण श्रीगोकुलनाथप्रभृत्याचार्याणां, वेदादिवाक्यानां श्रीहरिरायाणां चवाक्यसमन्वये कृते सति प्रथमतः संस्कारात्मकोऽक्षरसम्बन्धस्ततो तद्द्वारा फलसम्बन्ध इति राद्धान्त इत्येवं मम प्रतिभातीत्याह ।

तदविचारचारु, नहि श्रीमदाचार्यचरणानां श्रीमद्गोकुलनाथानां श्रीमद्धरिरायाणां वा तथाभिप्रायः । नात्र पुष्टिमार्गे ब्रह्मसम्बन्धपदेनाक्षरसम्बन्धः, किन्तु "रसो वै सः" इति श्रुतिप्रतिपाद्यस्य श्रीकृष्णस्यैव सम्बन्धः । ब्रह्मसम्बन्धप्रतिपादके श्रीमदाचार्यचरणोक्ते सिद्धान्तरहस्याख्ये ग्रन्थे मुद्रिताष्टीका एकादशसङ्ख्याकाः । टीकाकाराणां नामानि च श्रीमद्गोकुलनाथरघुनाथकल्याणरायव्रजोत्सवगोकुलोत्सवहरिरायविठ्ठलेश्वरपुरुषोत्तमगिरिधरलालभट्टश्रीशानुवर्तिन इति । इमे सर्वेऽप्येतद्विषय ऐकमत्येन श्रीकृष्णसम्बन्ध

एवेति प्रतिपादयन्ति । एभिः प्रतिपादितानि ब्रह्मसम्बन्धलक्षणानि समालोच्य ब्रह्मसम्बन्धपदेन श्रीकृष्णसम्बन्धस्यैव भानं भवति प्रेक्षावतां चेतसि । तानि च लक्षणानि विपश्चितां विनोदायात्रापि मया सङ्गृह्यन्ते । तद्यथा—

( १ ) श्रीगोकुलनाथाः—ब्रह्मसम्बन्धकरणं नाम एतन्मार्गीयाचार्यद्वारा भगवन्निवेदनम् ।

( २ ) श्रीरघुनाथाः—बृहत्वात् ब्रह्म पुरुषोत्तमः तत्सम्बन्धस्तस्मिन् देहात्मनोर्निवेदनलक्षणः ।

( ३ ) श्रीकल्याणरायाः—ब्रह्मसम्बन्धो नाम स्वमार्गाचार्यद्वारा भगवति निवेदनम् ।

( ४ ) श्रीव्रजोत्सवाः—ब्रह्मसम्बन्धकरणं नाम साक्षात्पुरुषोत्तमसम्बन्धकरणम् । तच्च श्रीमदाचार्यद्वारा शरणगमनपूर्वकम् ।

( ५ ) श्रीगोकुलोत्सवाः—ब्रह्मणः श्रीपुरुषोत्तमस्य सम्बन्धिकरणात् सर्वसमर्पणेन तदीयत्वसम्पादनात् ।

( ६ ) श्रीहरिरायाः—आदौ सम्बन्धकरणं कन्ययेव स्वयंवरे । स्वस्य सर्वपदार्थानां मनसा तेन योजनम् । सम्बन्धवत्या दूत्येव गुरुणा तत्कृतिर्भवेत् । सम्बन्धश्चापि निर्दोषस्तथा सर्वसमः स्मृतः । वह्नेरिवेति बोधाय प्रोक्तं ब्रह्मपदं पुनः । 'निर्दोषं हि समं ब्रह्मे'त्यत्रोक्तं तत् तथाविधम् । स्यात् प्रयुक्ते कृष्णपदे विषमत्वं गुणाहितिः । सम्बन्धे तादृशापेक्षा नास्ति दोषनिवारणात् । दोषमात्रनिवृत्यर्थं ब्रह्मसम्बन्ध उच्यते ।

( ७ ) श्रीविठ्ठलेश्वराः—ब्रह्मणा मया सम्बन्धः कार्यः ।

( ८ ) श्रीगिरिधराः—अस्मिन् मार्गे यशोदोत्सङ्गलालितश्रीकृष्णस्यैवोपास्यत्वात्तस्य चात्रलोके अवतारमात्रभ्रमत्वादत्र तद्व्यावृत्त्यर्थं ब्रह्मपदोपादानम् । तेन ब्रह्मणा सह देहजीवयोर्यः सम्बन्धः स्वमार्गीयनिवेदनेन तदीयत्वसम्पादनलक्षणः ।

(९) लालूभट्टाः—ब्रह्मणा सह सम्बन्धः स्वस्वामिभावलक्षणो देहेन्द्रियप्राणान्तःकरणदारागारपुत्रादीनामात्मनश्च तदीयत्वमिति यावत्। तस्य करणात् गद्यसहितपञ्चाक्षरनिवेदनमन्त्रस्योपदेशेन स्फुटीकरणादित्यर्थः।

(१०) श्रीशानुवर्तिनः—निर्दोषं हि समं ब्रह्माहम्, तस्मिन् सम्बन्धस्य करणात्, साधकतमात् सगद्यपञ्चाक्षरकथनात्। अंशत्वेपि "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति भक्तिमार्गीयात्मसमर्पणापरपर्यायनिवेदनद्वारा सेवकत्वकरणादित्यर्थः।

(११) विद्वच्छिरोमणिश्रीपुरुषोत्तमाः—ब्रह्मसम्बन्धो नाम सर्वस्मिन् भगवत्स्वामिकत्वरूपः सम्बन्धः, तस्य करणं नाम भगवता आचार्यान्प्रति गद्येनोक्तो य आत्मसमर्पणप्रकारः, तद्रीत्या भगवति स्वात्मसहितस्वीयसर्वपदार्थानां भगवति तथात्वविज्ञापनम्। "स वै नैव रेमे" इति श्रुतेः, "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते स्वाम्यं तु तत्र कुधियोपर ईश कुर्युः" इत्यादि वाक्याच्च; वस्तुतः सर्वस्य भगवदीयत्वेऽपि "स वै नैव रेमे" इत्यादि श्रुत्या रमणार्थं द्वितीयनिर्माणादि श्रावणात्, तेनापादिता या तत्तत्पदार्थे जीवस्य स्वत्वस्वीयत्वाभिमतिः, तत्परित्यागे, तेषु भगवदीयत्वस्य विज्ञापनमिति यावत्।

एवं श्रीमद्गोकुलनाथप्रभृतिटीकाकाराणां श्रीकृष्णसम्बन्धस्यैव ब्रह्मसम्बन्धपदेनाभिप्रेतार्थत्वम्।

अथात्र विचार्यते, किमयं ब्रह्मसम्बन्धाख्यः संस्कारोऽनवतारदशायामेव भवति, अथवाऽवतारानवतारोभयदशायाम्? अत्रोच्यते—अवतारदशायां भगवदाज्ञया समुद्भूतानां भक्तानां निर्दुष्टत्वात्, भगवत्साक्षात्कारवत्वाच्च तदानीं भगवान् स्वयमेव तान् लीलानुभवं कारयति, ते च मनसैव सर्वं भगवति विनिवेद्य भगवन्तं प्रपद्यन्ते; अनवतारदशायां जीवानां सर्वदोषदुष्टत्वात् तत्कृतसेवारूपाया भक्तेर्भगवतानङ्गीकारे तत्फलाभावादुपदिष्टोऽपि भक्तिमार्गः कथं फलिष्यतीति यदा श्रीमदाचार्यचरणाश्चिन्तां कृतवन्तः, तदा तच्चिन्तानिवृत्त्यर्थमाविर्भूतेन भगवता श्रीमुखेनैव ब्रह्मसबन्धद्वारा तेषामङ्गीकारस्योक्तत्वात्,

स्वमार्गीयाचार्यद्वारा कृतात्मनिवेदनानां सेवा साक्षादेव भगवानङ्गीकरोतीति 'देवरखा'भिजनेनानिच्छताप्यङ्गीकार्यम् । एवंच इदानींतनानां जीवानामात्मनिवेदनाख्यब्रह्मसम्बधेन साक्षादेव भगवान् तदर्पितं निखिलमपि स्वीयत्वेनाङ्गीकरोति । तथाहि यदि ब्रह्मसम्बन्धोक्षरसम्बन्धः स्यात्, तदा तदर्पितं किमपि वस्तु श्रीकृष्णो नाङ्गीकुर्यात्तस्य परात्परपुष्टिस्वरूपत्वात्, यदि चेत् ब्रूषे फलसम्बन्धोत्तरमेव भगवानङ्गीकरोति निवेदितं वस्तुजातमिति, तदा धन्योऽसि (?) त्वन्मते फलसम्बन्धात्प्रागनुष्ठितसेवाया वैयर्थ्यापातः । नायं सिद्धान्तः कस्यापि व्याख्याकृतो वा श्रीमदाचार्यचरणानां वा सम्मतः ।

यदि हि "**ब्रह्मविदाप्नोति परम्**" इति श्रुतिः प्रमाणत्वेन पुरस्कृता भवेत्तदापि श्रूयताम्—इयं हि श्रुतिः आनन्दमयाधिकरणे विषयवाक्यत्वेनोपन्यस्ता, तैत्तिरीयोपनिषद्येव तद्व्याख्यानमपि द्रष्टव्यम् । तथाहि "तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्; सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अत्रायं भावः—अक्षरब्रह्मज्ञानवान् परं ब्रह्मानन्दमात्रकरपादमुखोदरादिरूपं श्रीकृष्णं प्राप्नोति । सत्यं ज्ञानमित्यनेन भगवतः सच्चिदानन्दविग्रहतोक्ता, यो वेदेत्यादिना वेदनप्रकारश्च । नह्यक्षरज्ञानमात्रेण भवति हि परमानन्दविग्रहस्य श्रीकृष्णस्याप्तिस्तस्य वरणैकलभ्यत्वात् "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" इति श्रुतेः । एवंच व्याख्येययजुषि वेदनप्राप्यत्व उक्ते सति श्रुतिद्वयविरोधपरिहारायाक्षरब्रह्मवित्त्याऽविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते, तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात्पुरुषोत्तमप्राप्तिर्भवतीति ध्येयम् । एवं चाक्षरधाम्नो ज्ञानेन भगवतः श्रीपुरुषोत्तमस्य महामहिमज्ञानं भवति, समासादिते च माहात्म्यज्ञाने यदा सुदृढः सर्वतोऽधिकः स्नेह उत्पद्यते तदा भगवान् स्वेच्छया वृणोतीत्यवगन्तव्यम् । तथाहि अक्षरज्ञानेन भगवतो महामहिमज्ञानं सम्भवति, नत्वात्मनिवेदनम्, सर्वदोषनिवृत्तिर्वा । माहात्म्य-

ज्ञानरूपस्यैव ब्रह्मज्ञानस्य भक्तेः पूर्ववर्तित्वान्नियतपूर्ववर्तित्वाद्धेतोः "कारणाभावेन कार्याभावः" इतिन्यायेन भवतु नाम कार्यकारणभावः सम्बन्धः। तेन प्रकृते किमायातम्? नचात्मनिवेदनं नामाक्षरब्रह्मज्ञानम्, तस्य सर्वस्मिन् भगवत्स्वामिकत्वरूपसम्बन्धस्य सर्वैरपि व्याख्याकृद्भिः, श्रीमद्धरिरायचरणैश्च "आदौ सम्बन्धकरणं कन्ययेव स्वयंवरे। स्वस्य सर्वपदार्थानां मनसा तेन योजनम्। सम्बन्धवत्या दूत्येव गुरुणा तत्कृतिर्भवेत्। सम्बन्धश्चापि निर्दोषस्तथा सर्वसमः स्मृतः। वह्नेरिवेति बोधाय प्रोक्तं ब्रह्मपदं पुनः। 'निर्दोषं हि समं ब्रह्म'यत्रोक्तं तत्तथाविधम्।" इत्यादिना यथा कन्या स्वयंवरे यं स्वपतित्वेन वृणोति तथा स्वस्य सर्वपदार्थानां तेन सह योजनेन तत्स्वामिकत्वसम्बन्धः स्थाप्यते, न केवलं वाङ्मात्रेण, किन्तु मनसा तत्स्वामिकत्वसम्बन्धः स्वीक्रियते, तथैवात्राप्यात्मनिवेदिना वस्तुजाते भगवत्स्वामिकत्वसम्बन्ध एव स्थाप्यते, नत्वक्षरसम्बन्धः, तस्य प्रकृतानुपयोगित्वात्। यदि हठादक्षरसम्बन्ध एव ब्रह्मपदेन गृह्यत इति चेद्ब्रवीषि, तदप्यविचारचारु। प्रकृते ब्रह्मपदोपादानं सम्बन्धस्य निर्दुष्टत्वख्यापनाय, परात्पर आनन्दविग्रहे ब्रह्मणि वैषम्यादिशून्यत्वज्ञापनाय च, सर्वैरपि व्याख्याकृद्भिस्तथैवोक्तत्वात्। तथाहि—

(१) श्रीमद्गोकुलनाथाः—ननु वेदान्ते च स्मृतौ ब्रह्मलिङ्गं भागवते तथा। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्याचार्यवचनादुपनिषत्स्वेव ब्रह्मपदं पुरुषोत्तमवाचकम्, नत्वन्यत्र, तथाप्यत्र ब्रह्मपदोपादानस्यायमाशयः—यथा ब्रह्मणि सर्वसमत्वं धर्मोऽस्ति, तद्वदत्रापि आचार्यनिवेदनानन्तरं सर्वेषामङ्गीकारे समत्वमेव नतु वैषम्यमिति ज्ञापनाय ब्रह्मपदोपादानम्। यद्वा यथा गीतासु "भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायाम्" इत्यादिवचनाद्वाक्यानामेवोपनिषद्रूपत्वम्, तद्वदत्रापि ब्रह्मसम्बन्धकरणादित्यादिवाक्यानां भगवद्वाक्यत्वेनोपनिषद्रूपत्वादत्र ब्रह्मपदस्य पुरुषोत्तमवाचकत्वमेवेति ब्रह्मपदोपादानम्। तेनास्मिन्मार्गे भगवदीयत्वेनैव सर्वदोषनिवृत्तिः, सेवायोग्यत्वं च। अतएव श्रुतिरप्याह "यमेवैष वृणुते तेन लभ्यः" इति। अस्मिन्मार्गे भग-

चद्वरणस्यैव दोषाभावहेतुत्वात्, दोषरहितस्यैव भगवत्प्राप्तिहेतुत्वाच्च । तस्माद-स्मिन्मार्गे भगवदीयत्वमेव सर्वदोषनिवृत्तिहेतुः । × × × सर्वथा निर्दुष्टपदार्थ-सम्बन्धेनैव सर्वदोषनिवृत्तिः, सर्वात्मना निर्दुष्टत्वं पुरुषोत्तमस्यैव, नान्यस्य, अत एवाचार्यैरुक्तम् "कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ।" अतो भक्तिमार्गे पुरुषोत्तमस्यैव सेव्यत्वात् तत्सम्बन्धमात्रेणैव सर्वेषां सर्वदोष-निवृत्तिरिति नानुपपत्तिः काचिदित्याहुः ।

(२) श्रीमद्रघुनाथास्तु—बृहत्वाद्ब्रह्म पुरुषोत्तमः तत्सम्बन्धस्तस्मिन्दे-हात्मनोर्निवेदनलक्षणस्तत्करणात्सर्वेषामाब्रह्मस्तम्बपर्यन्तानां, सर्वेषां दोषाणां वक्ष्यमाणपञ्चविधानां दोषाणां निवृत्तिर्भवतीत्यर्थ इत्याहुः ।

(३) श्रीमत्कल्याणरायाः—स्वमार्गाचार्यद्वारा भगवति निवेदनं, तत्क-रणात् पुनः स्वयं जीवदेहादीनां भगवत्युपयोगकरणात् सर्वेषां देहजीवादीनां सर्वदोषनिवृत्तिर्भवतीत्यर्थ इत्याहुः ।

(४) श्रीमद्व्रजोत्सवाः—ब्रह्मसम्बन्धकरणं नाम साक्षात्पुरुषोत्तमसम्ब-न्धकरणमित्यवोचन् ।

श्रीमद्गोकुलोत्सवाः—ब्रह्मणः श्रीपुरुषोत्तमस्य सम्बन्धिकरणात्सर्वस्व-समर्पणेन तदीयत्वसम्पादनादिति प्राहुः ।

(६) श्रीहरिरायाणामभिप्रायस्तु प्रागेवोक्तत्वान्नात्र लिख्यते ।

(७) श्रीविठ्ठलेश्वराः—तदा श्रीमद्गिरिधारिणोक्तम्—यद्ब्रह्मसम्बन्धकरणा-त्सर्वदोषनिवृत्तिः । × × × तस्य जीवस्य मया सह सम्बन्धः कार्यः अथवा ब्रह्मणा मया सह सम्बन्धः कार्य इत्याहुः ।

(८) श्रीमत्पुरुषोत्तमाः—ब्रह्मसम्बन्धो नाम सर्वस्मिन् भगवत्स्वामिकत्व-रूपः सम्बन्धः । तस्य करणं नाम भगवता आचार्यान्प्रति गद्येनोक्तो य आत्मसमर्पणप्रकारः, तद्रीत्या भगवति स्वात्मसहितस्वीयसर्वपदार्थानां भगवति तथात्वविज्ञापनम् । "स वै नैव रेमे" इति श्रुतेः "क्रीडार्थमात्मन इदं त्रिजग-त्कृतं ते स्वाम्यं तु तत्र कुधियोपर ईश कुर्युः" इति वाक्याच्चेत्याहुः ।

(९) श्रीमद्गिरिधराः—अस्मिन्मार्गे यशोदोत्सङ्गलालितश्रीकृष्णस्यैवोपास्यत्वात्तस्य चाङ्गलोके अवतारमात्रभ्रमत्वादत्र तद्व्यावृत्त्यर्थं ब्रह्मपदोपादानम् । अथवा भगवद्वाक्यार्थकथनाद्वेद इवात्रापि ब्रह्मपदमित्याहुः ।

एतावता "ब्रह्मसम्बन्ध"पदेन श्रीमदाचार्यचरणानां किमभिप्रेतमिति तद्वंश्यानामेव वाक्यान्युदाहृत्य प्रदर्शितम् । यथा श्रीमदाचार्यचरणानां वाणी तद्वंश्यैरवगम्यते, नान्यैस्तथेति ।

अथ भट्टेष्वपि प्रधानतमस्य लालूभट्टस्यापि मतं प्रदर्श्यते । तद्यथा—

(१०) लालूभट्टस्तु—ब्रह्मणा सह स्वस्वामिभावलक्षणो देहेन्द्रियप्राणान्तःकरणदारागारपुत्रादीनां आत्मनश्च तदीयत्वमिति यावत् । + × × "क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोपर ईशकुर्युः" इत्यष्टमस्कन्धे विन्ध्यावलीवाक्यात्प्रपञ्चस्य सर्वस्यापि भगवत्क्रीडार्थं निर्मितत्वेन भगवदीयत्वात् प्रपञ्चान्तर्गतदेहादीनामपि भगवदीयत्वं वर्तत एव, तथापि "स्वाम्यं तु तत्र कुधियोपर ईश कुर्युः" इत्युक्त्या कुधीत्वप्रयुक्तो देहादावहंममाभिमानः, स एतेन सगद्यमन्त्रेण नाश्यते, ततश्च तदीयत्वं स्फुटीभवति । सेयमात्मनिवेदनरूपा भक्तिः सर्वथा सम्पादनीयेत्याह ।

एवमेव—

(११) श्रीशाचार्यमतानुवर्ती—निर्दोषं हि समं ब्रह्माहम्, तस्मिन् समन्धस्य करणात् साधकतमात्सगद्यपञ्चाक्षरकथनादित्याह ।

एवं मीमांसितेऽपि मतैकादशके कुत्रापि त्वदुक्तरीत्याऽक्षरसम्बन्धस्यानुक्तत्वात्, पुरुषोत्तमसम्बन्धस्य भगवत्सम्बधस्य च सर्वैरप्यङ्गीकृतत्वात्पुरुषोत्तमस्य श्रीकृष्णस्यैव सम्बन्धो ब्रह्मसम्बन्धपदेनाभिप्रेत इति । अत्र पुरुषोत्तमाक्षरब्रह्मणोः स्वरूपविषये भूयान् विचारो भवतां पुरतः समुपस्थापयितुं समर्थोऽस्मि, परमत्र विस्तरभिया विरम्यते । भगवदिच्छया, ग्रन्थान्तरे तं विचारमुपन्यस्य भवत्सेवायामुपस्थास्यामि ।

साधनसम्बन्धोऽक्षरसम्बन्ध इति पक्षोपि न शास्त्रसम्मतः, ब्रह्मसम्बन्धस्य

दोषनिवारकत्वात्, फलसम्बन्धस्य तु दोषनिवृत्तौ, स्वीयत्वेन परिगृहीते जीवे पदार्थजातस्य सम्पादिते भगवदीयत्वे सम्भवाच्च। प्रकृते ब्रह्मसम्बन्धकरणादिति वाक्ये दोषनिवृत्तेरुक्तत्वात्साधनसम्बन्धो नाक्षरसम्बन्धस्तत्पद्ये सर्वैरपि घण्टाघोषेण ब्रह्मपदेन पुरुषोत्तमस्यैव ग्राह्यत्वात्।

अथ "आदौ सम्बन्धकरण"मित्यारभ्य "साधनतां गतः" इत्यन्तानां वाक्यानां विचार आरभ्यते, भवन्मते तत्राक्षरसम्बन्धस्य सुव्यक्तत्वात्। तदपि त्वादृशां दुराग्रह एव व्यक्तीकरोति। "आदौ सम्बन्धकरणं कन्ययेव स्वयंवरे, स्वस्य सर्वपदार्थानां मनसा तेन योजनम्" अस्मिन् वाक्ये साधनसम्बन्ध उक्तः, परं नायमक्षरसम्बन्धः, अक्षरस्य गणितानन्दकत्वात्, धामवाचकत्वात्; "निर्दोषं हि समं ब्रह्मे"त्यादिवाक्यैः श्रीकृष्णस्यैवोक्तत्वात्, पुरुषोत्तमातिरिक्तस्य युगपत्सर्वदोषनिवृत्तिकरणासम्भवात्, पुष्टिमार्गे फलसाधनयोरैक्याच्च। उत्तरार्धे सर्वपदार्थेषु तत्स्वामिकत्वस्थापनं यदुक्तं तेनाप्ययं नाक्षरसम्बन्धः, किन्तु पुरुषोत्तमसम्बन्ध एवेत्यभ्युपगम्यते। स्वयंवरोदाहरणेऽपि तदेव बीजम्, नहि स्वयंवरकाले वृतस्य "तेन निर्दुष्टतासिद्धिर्विधिनेव रतौ पुनः, ईदृक्सम्बन्धबोधाय प्रोक्तं ब्रह्मपदं पुरा।" इति वाक्याद्रूपान्तरं भवितुमर्हति, परिग्रहणकाले यस्य पतित्वेन परिग्रहः, फलदानावसरेऽपि स एवेति लोकसिद्धत्वात्; अन्यथा व्यभिचारापत्तेः। "ईदृक्सम्बन्धबोधाय प्रोक्तं ब्रह्मपदं पुरा" इति वाक्येऽपि तस्यैव "निर्दोषं हि समं ब्रह्म" इति वाक्यप्रतिपाद्यस्य ब्रह्मणः श्रीपुरुषोत्तमस्य फलदातृत्वेनोक्तत्वाच्च। "सम्बन्धश्चापि" इत्यारभ्य "तत्तथाविधम्" इत्यन्तस्यापि पुरुषोत्तमपरत्वात्, निर्दोषं हि समं ब्रह्मेत्यत्रोक्तमिति वाक्येन स्फुटीकरणाच्च। "स्यात्प्रयुक्ते कृष्णशब्दे" इत्यनेन यदि साध्यतेऽक्षरसम्बन्धस्तर्हि सोऽपि दुराग्रह एव। वैषम्यदोषपरिहारार्थं तथोक्तत्वात्, श्रीहरिरायचरणैः सर्वैरपि टीकाकृद्भिश्चतथाङ्गीकारात्, श्रीगिरिधरैस्तु स्पष्टमेवोच्यते "अस्मिन्मार्गे यशोदोत्सङ्गलालितस्य श्रीकृष्णस्यैवोपास्यत्वात्तस्य चाज्ञलोके अवतारमात्रभ्रमत्वादत्र तद्व्यावृत्त्यर्थं ब्रह्मपदोपादानमि"ति। "दोषमात्रनिवृत्त्यर्थं ब्रह्मसम्बन्ध उच्यते। गुणाधायकसम्बन्धः फलसामयिको मतः"।

इति वाक्ये त्वक्षरस्य गन्धोऽपि नास्ति, दोषनिवृत्त्यर्थं य आत्मनिवेदनात्मकः सम्बन्धो भवति स साधनसम्बन्धः, तेन सेवाधिकारिता सिद्ध्यति, सेवा हि पुरुषोत्तमस्यैव भवति पदार्थजातस्य समर्पणमपि भगवते कृष्णायैव। "तस्मिन्वाच्ये" इत्यारभ्य "लौकिक" इत्यन्तेन वाक्येन साधनसम्बन्धः स्थाप्यते। साधनसम्बन्धमनङ्गीकुर्वतां पक्षे, तेन दोषकथनात्प्रकृतानुपयोगित्वं तस्य वाक्यस्य, तथापि तुष्यतुदुर्जनन्यायेन विचारितेऽपि वाक्यार्थे कृष्णसेवादिसाधनवैयर्थ्यं माभूदितिकृत्वा साधनसम्बन्धः फलसम्बन्धश्चेति सम्बन्धद्वयमपि सिद्धम्; लौकिके विवाहे येन सह सम्बन्धस्तस्यैव फलदातृत्वस्यानुभवसिद्धत्वात्, स्वरूपान्तरं न सिद्ध्यति। ब्रह्मपदस्य दोषनिवृत्तिरेव प्रयोजनम्, तत्र प्रयुक्ते कृष्णपदे, श्रीकृष्णस्य फलात्मकत्वात्, साधनसम्बन्धस्य फलसम्बन्धस्य च कार्यपार्थक्यात् साधनसम्बन्धोप्यङ्गीकार्य इत्याशयः। नहि तेन प्रकृतेऽक्षरसम्बन्धसिद्धिः। "विषमश्च हरि" रिति वाक्येन ब्रह्मपदमनुक्त्वा प्रयुक्ते कृष्णपदे वैषम्यदोषोद्भावनात् न तत्र कृष्णपदप्रयोगः। हेतुसम्बन्धः साधनसम्बन्धः स तु कृष्णसम्बन्ध एव। अत एव तत्सम्बन्धात् कृष्ण एव साधनतां प्राप्नोतीत्येतेन पुष्टिमार्गे साधनफलयोरैक्यं प्रतिपाद्यते न तु पार्थक्यम्। श्रीकृष्ण एव साधनत्वं प्राप्य फलं प्रयच्छतीति सुधीभिराकलनीयम्। अग्रे च "ब्रह्मेति प्रोच्यते सर्वसमत्वाद्दोषनिर्हृतेः। व्यापकत्वं च सम्बन्धे तेनैव विनिरूपितम्। करणोक्त्या न मुख्योऽत्र भावित्वान्मानसी कृतिः। युक्तः प्रथमसम्बन्धो भावात्मा भावरूपिणा" इति वाक्याभ्याम् ब्रह्मसम्बन्धस्य व्यापकत्वं भावात्मत्वं चाख्यायते, स च सम्बन्धो भावरूपिणा श्रीकृष्णेन सममेव "भावात्मा हरिरेवैक" इत्यादिवाक्यात्। "मानसे पूर्वसम्बन्धे" इति वाक्येन साधनसम्बन्धे सञ्जाते साधनरूपा तनुवित्तजा सेवा कार्येति विनिरूप्यते "कृष्णसेवा सदा कार्या तत्सिद्ध्यै तनुवित्तजा" इति श्रीमदाचार्यचरणवाक्यात्। तत्रापि कृष्णपदस्य स्पष्टमुक्तत्वाच्च। अतो विचक्षणैः साधनसम्बन्धोऽपि कृष्णसम्बन्ध एवेति विभावनीयम्।

अथ "श्रावणः पुष्टिमार्गीयश्चातुर्मास्यगतत्वतः। विष्णुसम्बन्धिसम्बन्धात्स-

म्बन्धख्यापको मतः। बोध्यते तेन पुष्टिर्हि सम्बन्धवरणात्मिका।"इति वाक्यार्थ-विचारः प्रस्तूयते। श्रवणर्क्षं हि वैष्णवं तत्सम्बन्धी श्रावणः तस्य सम्बन्धात् नाम-श्रावणसम्बन्धात् स श्रावणो मासः सम्बन्धख्यापकः श्रीकृष्णसम्बन्धख्यापको मत इत्याशयः। अत्रापि सकलव्याख्याकाराणामैकमत्यम्, विस्तरभिया तन्नात्र लिख्यते, सिद्धान्तरहस्ये द्रष्टव्यम्। एवं च पुरुषोत्तमसम्बन्धख्यापकत्वादत्र-सम्बन्धवरणात्मिका पुष्टिर्बोध्यते, पुष्टिमार्गे पुरुषोत्तमस्यैव सेव्यत्वात्। एवं विचारिते श्रीहरिरायाणां तदतिरिक्तानां व्याख्याकृतां च ब्रह्मसम्बन्धपदेना-क्षरसम्बन्धे सर्ववैव नाभिप्राय इति विभावयन्तु विपश्चितः।

अथ श्रीसुबोधिनीवाक्यार्थोऽपि विचार्यते—"ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः" इत्यत्रापि ब्रह्मसम्बन्धोऽक्षरसम्बन्ध इति वक्तुं न शक्यते। अवतारदशायां साक्षादेव सम्बन्धस्य सिद्धत्वात्, श्रीहरिरायचरणैरपि तथैव प्रतिपादित्वात्। "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः" इत्य-स्यात्मनिवेदनपरकत्वाभावाच्च। अत्र गोपानां हृदये भगवान् यदा ईश्वर-त्वेन जातः, तदा अक्षरमपि लोकत्वेनाविर्भूतमिति सुबोधिन्यां स्पष्टमुक्त-त्वात्। अत्रायं भावः—यदा भक्तानां चेतसि भगवत आविर्भावस्तदा निखि-लमपि तदाकारत्वेन भवति। अत्रापि तथैव गोपानां हृदये भगवत आविर्भावे सञ्जातेऽक्षरस्यापि लोकत्वेनाविर्भावः। अत एव शब्दब्रह्मणो जलरूपता च अतोऽक्षरब्रह्मात्मकानेतान् ब्रह्महृदे नीत्वा स्नानं कारितवान्, तदा तेषु स्थितोऽपि लोकस्तिरोहितः, तत्रापि नीताः, पुनर्मग्नाः, उत्तमाधिकारिणो हि ते, शब्दब्रह्मात्मका एव जाताः, क्रमश्चायं परब्रह्मोक्तं शब्दब्रह्म तदुक्तं जगदिति, अत एवादूरविप्रकर्षेण ज्ञापकं, ततोऽपि भगवता ते उद्धृताः, चकारात् वेदैरपि, भगवदाज्ञया, अन्यथा प्रमाणगृहीता लीलायां नोपयुक्ता भवेयुः, तर्ह्येतत्कृतं व्यर्थमेवासीदित्याशङ्क्य प्रयोजनार्थं जातमित्याह ददृशुरिति।" एवं च शब्दब्रह्मणो लोकं ददृशुरिति श्रीसुबोधिन्यां स्फुटमे-वोक्तं, न तत्रात्मनिवेदनलक्षणस्य ब्रह्मसम्बन्धस्य कुत्रापि प्रसङ्ग इति नेत्रे विस्फार्य द्रष्टव्यम्, किं दुराग्रहेण।

श्रीव्रजाभरणदीक्षितानां मतमुपन्यापि समर्पणाख्यो ब्रह्मसम्बन्धोक्षरसम्बन्ध इति वक्तुं न शक्यते, त एव गद्यटीकायां तत्रैव "ब्रह्मसम्बन्धकरणादित्यत्र ब्रह्मपदमविकृतत्वाय दैवकत्वाय सच्चिदानन्दरूपत्वबोधनार्थम्" इत्याहुः।

श्रीहरिरायचरणा अष्टाक्षरशरणमन्त्रव्याख्यावसरे गद्यटीकायां "श्रीकृष्णो युगलस्वरूपो मम शरणं ममाश्रयो भूयात्। सर्वाश्रयेषु देहदाराभोगपुत्र-मातृपितृभगिनीकुटुम्बगृहवित्तपशुग्रामदेशेषु शिथिलेषु मृगतृष्णावद् दृश्य-मानेषु तदा आश्रयः आनन्दरूपो नित्यः परमात्मप्रदो मम भवतु।" इत्याहुः यदि साधनसम्बन्धोक्षरसम्बन्ध एव तेषामभिप्रेतस्तर्ह्यत्रापि—ब्रह्मसम्बन्धात्पूर्वमेव शरणमन्त्रेण श्रीकृष्णाश्रयं न वदेयुः, त्वद्रीत्याऽक्षराश्रय एव स्यात्, परं न तथा व्याख्यातं तैः। किञ्च स्वमार्गीयशरणसमर्पणसेवादिनिरूपणग्रन्थादावपि नोक्तोक्षरसम्बन्धः। गद्यटीकायामेवाग्रे "तदुक्तं ब्रह्मसम्बन्धकरणात्सर्वेषां देह-जीवयोः सर्वदोषनिवृत्तिर्हि दोषाः पंचविधाः स्मृताः। भगवते षड्गुणसम्पन्नाय कृष्णाय सर्वान्तःकरणहरणायेत्याहुः।" तेन ब्रह्मसम्बन्धपदेन तेषां किम-भिप्रेतं, (श्रीकृष्णसम्बन्धोक्षरसम्बन्धोवेति) तच्चक्षुषो रुपनेत्रे धृत्वा द्रष्टव्यम्।

एवमेव जपसमये ध्यानप्रकारविवेचनेऽपि "अथ पंचाक्षरे यादृशे प्रभौ शृङ्गारसंयोगात्मके सर्वात्मभावेन दास्यं तदुपयोगि तथा देहादौ निरन्तर-भावनां प्रार्थयेत् तत्र प्रथमं श्रीकृष्णपदप्रयोगस्य प्राकट्यसामयिकशोभाभि-व्यञ्जकत्वात् भावनापुरःस्थितं युगलस्वरूपं अष्टषोडशचतुर्विंशतिसखीमण्डल-मध्ये नवरसमयं चतुर्विंशरमणात्मकं श्रीकृष्णं विधाय भावनया देहेन्द्रिया-दिकमप्यन्तःप्रवेश्य तत्रैव सर्वदा निरुद्धीभूय दास्यं प्रार्थनीयमिति बोधाये"ति वदन्ति। यदि श्रीमद्धरिरायाणां मते ब्रह्मसम्बन्धेनाक्षरसम्बन्धो भवेत्तदा जयसमयेऽपि ते अक्षरब्रह्मणो ध्यानमेवोपदिशेयुः, न तु श्रीकृष्णध्यानम्। श्रीम-द्गोकुलनाथानां श्रीमद्वल्लभानां श्रीमद्गिरिधरणां गद्यटीकास्वपि श्रीकृष्णसम्बन्ध एव प्रतिपादितो नत्वक्षरसम्बन्धः। नात्र तन्मतोपन्यासः कृतो विस्तरभिया।

यदि चेद्ब्रवीषि, भगवतश्चरणयोस्तुलसीदलसमर्पणसदाचारश्चिरप्रवृत्त इति, तत्रापि श्रूयताम्, श्रीमदाचार्यचरणैस्तु भगवदुक्तानामक्षराणां सिद्धान्तरहस्ये

तथैवाज्ञप्तत्वात् तस्मिन्नेव सिद्धान्तरहस्ये श्रीपुरुषोत्तमैर्गद्यमन्त्रस्यापि स्वरूपं प्रतिपादितम्, तस्मिन् गद्यमन्त्र एव श्रीकृष्णायेति पदं त्वादृशां कलिकालतमश्छन्नदृष्टित्वान्न दृश्यते चेत्तत्र को दोषः ? सर्वैरपि गद्यमन्त्रव्याख्याकृद्भिः "कृष्णाय" इति पदस्य परात्परपुरुषोत्तमायेत्येवार्थः स्वीकृतः । सहस्त्रपरिवत्सरमितकालसमूहजन्यभगवद्वियोगोऽपि जीवानां नहि भवितुमर्हति—अक्षरब्रह्मवियोगः । किञ्च पञ्चाक्षरेऽपि कृष्णशब्दस्यैवोक्तत्वान्नाक्षरसम्बन्धो भवतीति दिक् ।

भवतु नाम पुरुषोत्तमसम्बन्धः, परन्तु सञ्जातेऽपि पुरुषोत्तमसम्बन्धे दोषनिवृत्तिस्तु कार्यतः एव भवति न स्वरूपतः । दोषाणां स्वरूपतः स्थितावपि न ते सेवायां बाधका भवन्ति, अत्रापि श्रीहरिरायचरणा एव प्रमाणमिति । तथैव श्रीरघुनाथाः, श्रीकल्याणरायाः, श्रीगोकुलोत्सवाः, श्रीविट्ठलेश्वराः, श्रीपुरुषोत्तमाश्च कार्यत एव दोषनिवृत्तिर्भवतीति मन्यन्ते । न च श्रीगोकुलेशव्रजोत्सवलालूभट्टश्रीशानुवर्तिनां मते स्वरूपतो दोषनिवृत्तेः कथनाद्विरोध इति वाच्यम्, तन्मतस्य फलसम्बन्धपरत्वात् ।

तदपि न विचारचारु—श्रीमदाचार्यचरणैः "हि" शब्दं प्रयुज्ज्य भगवत्सम्बन्धाद्दोषनिवृत्तेः प्रसिद्धिर्द्योत्यते । "अन्यथा सर्वदोषाणां न निवृत्तिः कथंचन" इत्यनेन भगवत्सम्बन्धाभावे दोषनिवृत्त्यभाव एवाज्ञापयन्ति श्रीमदाचार्यचरणाः । अत्रापि व्याख्याकाराणां वाक्यान्येव प्रमाणत्वेन स्थाप्यन्ते। तद्यथा—

(१) श्रीरघुनाथाः—यदि भगवत्सम्बन्धो न भवेत्तदा कथमपि सर्वदोषाणां निवृत्तिर्न भवेदित्यर्थ इत्याज्ञापयन्ति ।

(२) श्रीकल्याणरायास्तु—प्रकारान्तरेण जीवानां सर्वदोषनिवृत्तिर्न भवतीत्याहुः ।

(३) श्रीकुलोत्सवाः—मदुक्तप्रकारकाङ्गीकाराभावे त्वेतेषां दोषाणां निवृत्तिः कथञ्चन अपि न, सहस्त्रजन्मपर्यन्तमपि कृतैसाधनै र्न भविष्यतीत्यर्थः । साधनानामस्वधर्मत्वात् । दासानां तु सेवैव स्वधर्म इत्यङ्गीकारेणैव तदधिकारे सम्पन्ने

सर्वेन्द्रियाणां तदर्थमेव विनियोगे सति तन्नाशो भवेदेवेति भाव इत्याहुः। अत्रापि भगवत्सम्बन्धादेव सर्वथा दोषनिवृत्तिर्भवतीति स्फुटमेव ।

(४) श्रीविठ्ठलेश्वराः—भगवत्सम्बन्धो न भवेत्तदा कथमपि किञ्चिदपि सर्वदोषाणां निवृत्ति र्न स्यात्। × × × प्रकारान्तरेण साधननिष्ठेन किञ्चिद्दोषनिवृत्तिः, न तु सकलदोषनिवृत्तिरित्याहुः। अत्रापि सकलदोषाणां स्वरूपत एव निवृत्तिरिति स्पष्टमेव ।

(५) श्रीपुरुषोत्तमाः—अन्यथा एतदतिहाय सर्वदोषाणां निवृत्तिः कथञ्चन केनापि कर्मज्ञानभक्तिरूपेण साधनेन न, दोषहेतूनां कर्मदेशकालादीनां विद्यमानत्वात्तैः संयोगस्पर्शाभ्यां तदुत्पत्तिनैयत्यात् ।

(६) श्रीहरिरायचरणा अपि—"दोषमात्रनिवृत्त्यर्थं ब्रह्मसम्बन्ध उच्यते इत्याहुः ।

एवं विचारितेऽपि त्वदुक्तपक्षे सर्वथैव दोषनिवृत्तिरित्येव सिद्ध्यति। श्रीगोकुलनाथप्रभृतेस्तु स्वरूपत एव दोषनिवृत्तिरिति मतं भट्टेनापि स्वीक्रियत एव ।

यत्तु ब्रह्मसम्बन्धोत्तरं वेदबोधितकर्मणामाग्रहस्तु पुष्टिमार्गीयैः सर्वथा रक्षणीय एव। तथा च श्रीमद्वल्लभाचार्यचरणाः "निवेदिभिः समर्प्यैव सर्वं कार्यमिति स्थितिः" इत्याहुः। अस्मिन्वाक्ये श्रीमदाचार्यचरणैः कर्माणि कर्तव्यान्येवेत्याग्रहः सूचितः। किञ्च श्रीमद्गोकुलनाथा अपि 'सर्वं' लौकिकं वैदिकं च। लौकिकं पुत्रादिविवाहाद्यर्थं ब्राह्मणभोजनाद्यर्थं स्वोपभोगार्थं च कृतं, वैदिकं श्राद्धयागादिकम् । श्राद्धार्थमपि निष्पादितं पाकादिकं सर्वं, यागार्थं सम्पादितं घृतान्नादिकं सम्भारादिकं च सर्वं, भगवते निवेद्यैव भगवन्निवेदनानन्तरं पश्चात्सर्वं कार्यमिति सम्भाराणां तदाज्ञापूर्वकमेव करणं निवेदनम्। तथा च श्रीभागवते सप्तमस्कन्धे 'विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्। पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पितम्' इति वचनादियं भक्तिमार्गमर्यादा। मर्यादा नामानुल्लङ्घ्याज्ञा। यथा वेदादिमर्यादोल्लङ्घनेन कार्यकरणे कर्ता दोषभाग्भवति तथात्रापि भक्तिमार्गमर्यादोल्लङ्घनेन भक्तिमार्गीयोऽपि दोषभाग्भवतीति ज्ञापनाय स्थितेर्मर्यादात्वमुक्तं स्थितिरिति ।

सिद्धा. रह. कारि. ९ टीका ।

इयं हि श्रीगोकुलेशप्रभूणां व्याख्याऽस्ति । यस्याः प्रत्यक्षरे वेदशास्त्र-मर्यादारक्षणस्याग्रहः स्पष्ट एव । अथ मर्यादापालनविषये श्रीहरिरायाः किं वदन्तीत्यपि श्राव्यम्—

मार्गेत्र प्रथमं पुष्टिः सम्बन्धवरणात्मिका ।
मध्ये वेदोक्तमर्यादायुतभक्तिस्थितौ स्थितिः ॥ १४ ॥
अपाषण्डित्वसिध्यर्थं भगवत्तोषणाय च ।
फलपुष्टेर्योग्यतायै फलं कृष्णेन नान्यथा ॥ १५ ॥

अत्र हि कारिकाशयस्य कठिनत्वाद्विविच्यते—अर्थात् श्रीमद्वल्लभाचार्यप्र-काशितेऽस्मिन्पुष्टिमार्गे पूर्वं पुष्टिसम्बन्धस्य स्वीकारः । पुष्टिर्नामानुग्रहः । यः कोऽपि ब्रह्मणा साकं सम्बन्धं स्वीकरोति, तत्सम्बन्धं प्रभुः स्वयमेवाङ्गीकरोती-त्ययमस्मिन्पुष्टिमार्गे भगवतः प्रथमानुग्रहो भवति । न तथा शक्यते मर्यादा-याम् । यस्य सम्बन्धः स्यात्सएव स्वीकुर्यादितिमर्यादा । यदि भगवत्सम्बन्धः स्थाप्यते चेदनुग्रहोऽनावश्यकः स्यात् । किन्तु श्रीहरिरायाणां मतेऽक्षरसम्बन्धो भवत्येतदर्थमनुग्रहस्यावश्यकता । अक्षरसम्बन्धस्य भगवत्सम्बन्धत्वेनाङ्गीकार एव प्रथमा पुष्टिः । भगवान् असाधनं साधनं करोतीत्ययमेवानुग्रहः । अयं हि साधनावस्थायामनुग्रहः । अनन्तरं मधे—ब्रह्मसम्बन्धोत्तरं फलप्राप्तेः पूर्वं वेदोक्तमर्यादया सममेव भक्तिमर्यादायां स्थितिः । तेन लोकेऽपाषण्डित्वेन प्रसिद्धिः । अन्यथा श्रीकृष्णस्यासन्तोषे फलार्थमधिकाराभाव एव । तस्मा-त्पुष्टिमार्गीयैः स्वस्यापाषण्डित्वसिद्धयर्थं पुष्टिफलप्राप्त्यर्थं च वेदोक्तमर्यादाया-मेव स्थितिः कर्तव्येति । किञ्च श्रीहरिरायचरणा अपि—

यथा गायत्रोपदेशः संस्कारोत्तरमुच्यते ॥ ९७ ॥
श्रुतिस्मृत्युदिताचारस्तदभावे फलं नहि ॥
आचरेदित्यनेनात्र ब्रह्मसम्बन्धतः परम् ॥ ९८ ॥
समर्पणं तथाचारो ह्यसमर्पितवर्जनम् ॥
तदभावेऽङ्गहीना तु सेवा नैव फलेदिह ॥ ९९ ॥

यथा ज्ञानमार्गे उपवीतसंस्कारोत्तरं गायत्र्युपदेशो भवति, तथैवात्र श्रीवल्लभाचार्यप्रकाशिते पुष्टिमार्गे ब्रह्मसम्बन्धरूपसंस्कारानन्तरं श्रुतिस्मृत्युदिताचाराणां पालनमेवोपदेशः। यदि वेदोक्तमर्यादायाः पालनं न कुर्यात्तदा फलप्राप्तिरपि न भविष्यति। मूले श्रीमद्वल्लभाचार्यैः '**आचरेत्**' इति पदोपन्यासः कृतः, तेन पुष्टिमार्गे ब्रह्मसम्बन्धोत्तरं श्रीकृष्णाय आत्मात्मीयपदार्थानां समर्पणं, वेदोक्तानामाचाराणां पालनं, असमर्पितत्यागश्चेति त्रयमवश्यमेव कर्तव्यमिति स्फुटीभवति। एतत्करणाभावेऽङ्गहीना सेवा निष्फला भवेदेवेत्याह कश्चिद्भट्टः,

तत्तुच्छम्। श्रीमद्गोकुलनाथानां श्रीहरिरायाणां च प्रमाणत्वेनोपन्यस्तवाक्यानां तथाभिप्रायाभावात्। प्रथमं तावच्छ्रीमदाचार्यचरणोदितायाः कारिकाया एव विचारः प्रस्तूयते। तथाहि श्रीमदाचार्यचरणाः सिद्धान्तरहस्यग्रन्थे "**निवेदिभिः समर्प्यैव सर्वं कार्यमितिस्थितिः**" इत्याहुः। अत्रहि भगवदाज्ञामक्षरश एवानुवदन्तः श्रीमदाचार्यचरणा "ब्रह्मसम्बन्धकरणात्" इत्युपक्रम्य साक्षाच्छ्रीकृष्णसम्बन्धेन दोषनिवृत्तिमाज्ञाप्य, "दोषाः पञ्चविधाः"इति वाक्येन दोषान्निरूप्य "**असमर्पितवस्तूनां तस्माद्वर्जनमाचरेत्**" इत्याहुः। एवं च दोषा न मन्तव्या इत्याज्ञाप्य पुनर्यथा दोषा नोद्भवेयुस्तथात्र "असमर्पितवस्तूनां तस्माद्वर्जनमाचरेदि"ति कथनम्। तथा चाचरेदिति नोदनयाऽसमर्पितत्यागस्य भाव्यत्वेन तस्मादिति हेतोः पुनर्दोषोद्भवाभावत्वेन निरूपणम्। इतः परं "निवेदिभिः समर्प्यैव सर्वं कार्यमिति स्थितिः" इतिवाक्येन समर्पण एवाग्रहः सूच्यते। न चात्रैवकारस्य कार्यमित्यनेनान्वयः कर्तुं शक्यः। प्रमादात्तथाकर्तॄणां शब्दशास्त्रप्रवेशाभाव एव सूच्यते। तथाहि—आख्यातसमभिव्याहृतस्यैवकारस्य पदद्वयव्यवहितेन कार्यमित्यनेन सहान्वये वाक्यभेदापत्तेः। समर्पणस्यैव प्रकृतोपयोगित्वाच्च। नाप्यत्र समर्पणस्य कार्यशेषत्वम्, येन कर्मणामाग्रहो भवेत्, समर्पणस्यैवात्र प्रधानत्वात्। कर्मणामाग्रहस्य प्रकृतानुपयोगित्वान्नोक्तवाक्येन तत्सिद्धिः। भक्तिमार्गे नश्वराणां कर्मफलानां हेयत्वेन बोधनात्। भक्तौ हि "कर्माप्येकं तस्य देवस्य सेवा" "कृष्णसेवा

१ ब्रह्मसम्बन्धपदेनाक्षरसम्बन्धो नैव ग्राह्य इत्यस्माभिः प्रागेव विचारितम्।

सदा कार्या" "परिचर्या सदा कुर्यात्" "कृष्णं परिचरेत्सदा" इत्यादिवाक्यबोधितकृष्णसेवाया एवाग्रहः । भक्तास्तु "दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" इत्यादिवाक्यैः मोक्षमपि तुच्छत्वेन मन्यन्ते, का कथा तर्हि कर्मजन्यस्वर्गादीनाम् ।

श्रीमद्गोकुलनाथानां वाक्येष्वपि सर्वथैव नास्ति त्वदुक्ताशयः । "श्राद्धार्थमपि निष्पादितं पाकादिकं सर्वं, यागार्थं सम्पादितं घृतान्नादिकं सम्भारादिकं च सर्वं, भगवते निवेद्यैव भगवन्निवेदनानन्तरं पश्चात्सर्वं कार्यमिति सम्भाराणां तदाज्ञापूर्वकमेव करणं निवेदनम् ।" इत्यनेनापि समर्पणस्याग्रहः स्फुटीभवति, नतु कर्मणाम् । अपाषण्डित्वसिध्यर्थं लोके यत्किमपि कर्म क्रियेत चेत्तदपि निवेदनानन्तरमेव कर्तव्यमिति स्फुटाशयः । तेन नात्र त्वदुक्तप्रकारेणाग्रहः सिद्ध्यति । अग्रेच "इयं भक्तिमार्गदा" इत्युक्तम् । भक्तिमार्गकथनेनैव कर्ममार्गनिरास इत्यपि स्पष्टमेव । "विष्णोर्निवेदितान्नेन" इतिवाक्यं तु पुरणान्तरस्थम् । तस्यापि "सोमेनेष्ट्वा बृहस्पतिसवेन यजेत" इतिवत् समर्पणस्य वैदिककर्माचरणात्प्रागनुष्ठेयत्वमुच्यते, न तु वैदिककर्मणामाग्रह इत्याशयः ।

किञ्च श्रीमद्धरिरायाणां यानि वाक्यानि प्रमाणत्वेनोपन्यस्तानि तान्यपि कर्मणामाग्रहस्तु नैव बोधयन्ति । तथा हि—"मार्गेत्र प्रथमं पुष्टिः सम्बन्धवरणात्मिका । मध्ये वेदोक्तमर्यादायुतभक्तिस्थितौ स्थितिः । अपाषण्डित्वसिद्ध्यर्थं भगवत्तोषणाय च । फलपुष्टेर्योग्यतायै फलं कृष्णेन नान्यथा" इत्यादिवाक्यैरपि कर्मणामनाग्रह एव सिद्ध्यति । प्रथममेव सम्बन्धवरणात्मिका पुष्टिः प्रतिपादिता । सर्वदोषदुष्टस्य जीवस्य युगपत्सर्वदोषनिवृत्तिपूर्वकं वरणमेवात्रानुग्रहः पुष्टिः । नत्वक्षरसम्बन्धस्य स्वसम्बन्धत्वेन स्वीकाररूपः । ब्रह्मसम्बन्धपदेनाक्षरसम्बन्धस्य पूर्वमेव दूषितत्वात् । 'मध्ये' इत्यारभ्य नान्यथा" इत्यन्तेन ब्रह्मसम्बन्धोत्तरं भक्तिमार्गीयैः कथं स्थेयम्, का वा भक्तिमार्गमर्यादेत्युक्तम् । अपाषण्डित्वसिद्ध्यर्थं वेदोक्तमर्यादायुतभक्तिस्थितौ स्थितिः कर्तव्या । अयं पाषण्डीति लोकापवादो माभू-

दित्येव प्रयोजनं कर्मकरणस्य । भक्तिमार्गीयप्रकारेण—सम्भाराणां तदाज्ञापूर्वकमेवकरणेन भगवत्तोषात्फलपुष्टेर्योग्यतापि सिद्धयति । फलं तु कृष्णेनैव प्रदीयते नान्येन । अत्रापि कृष्णस्यैव फलसमर्पकत्वप्रतिपादनेन यागादौ इन्द्रवरुणानां फलदत्वं निवारितम्। वेदोक्तमर्यादा तु "अपाषण्डित्वं सिद्धयर्थमे"वेत्यत्रापि समर्पणस्यैवाग्रहो न तु कर्मणाम् । अग्रे च "यथा गायत्रोपदेशः" इत्यारभ्य "फलेदिह" इत्यन्तेन वाक्येनापि भक्तिमार्गीयाचारस्यैव निरूपणम्, न तु कर्मावश्यकतायाः । तथाहि—यथा संस्कारोत्तमुपनयनानन्तरं ( माणवकस्याचार्यसमीपानयमेवात्र संस्कारः, "तं च पर्युप्तशिरसमङ्क्तमानयति, पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामितिवाचयतीति कल्पसूत्रात् ) गायत्र्युपदेशः श्रुतिस्मृत्युदिताचारो वर्तते, तथैवात्र "आचरेत्" इत्यनेन ब्रह्मसम्बन्धतः परं समर्पणं असमर्पितवर्जनमाचारः । तदभावेऽङ्गहीना सेवा नैव फलेदिति । अत्रापि भक्तिमार्गीयाचारस्य निर्णयो न तु कर्मणामावश्यकता- संस्कारोत्तरं यदि गायत्र्युपदेशरूपाचारस्य पालनं न भवेत्तदा संस्कारजन्यं वेदाध्ययननाधिकाररूपं फलं न भवेत्, तथवात्र यदि ब्रह्मसबन्धोत्तरं लौकिककार्येषु,अपाषण्डित्वसिद्धयर्थं वैदिककार्येष्वपि सर्वेषां पदार्थानां समर्पणं न भवेत्, तथा स्वोपयोगार्थमसमर्पितत्यागश्च न भवेत्, तदा सेवायाः फलं न भवेदित्याशयः । भक्तिमार्गीयाचारनिर्णायकेऽस्मिन्वाक्ये वैदिकक्रियामाणाग्रहस्तु त्वयैवानुभूयते, नान्यैर्विद्वद्भिस्तथाकर्तुं शक्यते । अत्रापि देवरखाभिजनेनोपनयनस्य ज्ञानमार्गाङ्गत्वमुच्यते, तदप्यविचारचारु, तस्य कर्ममार्गाङ्गत्वस्यैव सर्वैरपि शास्त्रकृद्भिस्वीकृतत्वात् ।

एतावता "देवरखिया"महाशयस्य दुराग्रहदूषितं मतं निरस्तम् । मीमांसानुरोधेन शास्त्रार्थकरणस्य तन्मनोरथमपि पूरयितुं भगवत्कृपया समर्थोऽयं जनः । तत्राप्यध्यक्षता मीमासाशास्त्रविदां श्रीमच्चिन्नस्वामिशास्त्रिनित्यानन्दपर्वतीयप्रमथनाथभट्टाचार्यबालकृष्णमिश्रादिविदुषामग्रणिनामेव भवतु । यदि चेद्गोस्वामिनामध्यक्षताया आग्रहस्तदा श्रीमदनिरुद्धाचार्याणां श्रीमद्व्रजरत्नानां च विदुषामेव भवतु ।

अथेदं विचार्यते यदस्याः श्रीमद्गोपालपूर्वतापिन्याः सरलत्वाच्छान्दोग्योपनिषदिव कठिनतमत्वाभावादणुभाष्योपकारकत्वाभावाच्च नेयं व्याख्यामपेक्षते । अस्यापि भट्टमतस्य प्रामादिकत्वात्तदुपेक्षैव कर्तव्या । तथाप्येतस्या उपनिषदः श्रीमदणुभाष्ये किंबहुना पुष्टिमार्गीयभक्तिस्वरूपविचारे कथमस्त्युपकारितेति निर्णीयते । तथाहि—श्रीमदणुभाष्ये तृतीयस्य तृतीयपादेऽष्टममुपपन्नाधिकरणं द्रष्टव्यम्, . नवममनियमाधिकरणञ्च । तत्र हि संसृतेर्दुःखात्मकत्वात्तन्निवृत्तेः सर्वेषामिष्टत्वाच्च मुक्तेरेव फलत्वं सर्वत्रोच्यत इत्युक्तं, परन्तु पुष्टिमार्गीयानां तु तदनपेक्षितमेव, अतएव "परं ब्रह्मैतद्यो धारयति" इत्यादि श्रीमद्गोपालपूर्वतापिन्युपनिषद्वाक्यमधिकृत्य "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इतिसूत्रारम्भः । ननु पुष्टिमार्गीयानां मुक्त्यनपेक्षत्वं कुत्रोक्तमितिचेच्छृणु—अथर्वणोपनिषत्सु "कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा" इति पञ्चपदोऽष्टादशार्णमन्त्रः । अग्रेच "एतस्मादन्ये पञ्चपदाऽभूवन् गोविन्दस्य मनवो मानवानाम् । दशार्णाद्यास्तेऽपि सङ्क्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत्" "एते तस्य स्वरूपार्थं वाचा वेदयति" इत्यादिना दशार्णत्वमपि प्राप्यते । अस्यार्थस्तु भाष्ये, पीयूषलहर्यां च द्रष्टव्यः, तत्र विस्तृतमेतद्विषये विवेचितं तत्रभवद्भिर्ग्रन्थकृद्भिः । एतदग्रे "किंतद्रूपं किं रसनं कथं हैतद्भजनम्" इत्यादि प्रश्नोत्तरं पठ्यते "भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यम्" इति ।

**अत्र प्रकाशः**—अत्र भक्तिशब्दाच्छान्दसः सोर्लुक् । रहस्यभजनमित्यस्य विवरणं **तदिहे**त्यादि । अर्थस्तु—तत् भजनम्, अमुष्यात्मनो वस्तुत एतदीयस्य जीवस्य इहामुत्रोपाधिनैराश्येनैव ऐहिकामुष्मिकयावत्फलेप्साराहित्येन कल्पनं तदीयत्वसमर्थनम् । अन्तर्बहिः सेवया तद्दृढीकरणम् । कृपूसामर्थ्ये इति धात्वर्थात् । एतदेव स्वस्य तदीयत्वसमर्थनमेव नैष्कर्म्यं

५

सन्यास इति। अन्ये तु "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनः कल्पनम्।" इति पठन्ति। एवं पाठद्वयेऽपि यावत्फलनैराश्यस्य प्रविष्टत्वादामुत्रिकमध्ये मुक्तेरपि प्रवेशात् तदनपेक्षत्वं समानम्।

एतदत्र विचार्यते—"अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तत्" इति मन्त्रोक्ता या पञ्चपदस्याष्टादशार्णमन्त्रस्यावृत्तिः पुनः पुनःकथनम्, "तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजेत्" इति ब्राह्मणोक्तं यत्तदधिष्ठातृध्यानादि, तस्य सर्वस्य अमृतत्वं फलम्, उपक्रम एव "यो ध्यायति रसति भजति सोऽमृतो भवतीत्यनेनोच्यते। भजनस्वरूपं च यावत्फलनैराश्येन भगवत्यात्मनः कल्पनमित्युच्यते। न च फलनैराश्येन भजनेऽप्यन्ते मुक्तिरेव भवित्रीतिवाच्यम्। "तं यथायथोपासते तथैव भवति तद्धैतान् भूत्वावति" इति श्रुतेर्भक्तिसाधनत्वेन ज्ञात्वा भजतः सैव फलम्।

---

१ अत्र रश्मिकाराः—**नैष्कर्म्य**मिति। यावत्फलेप्साराहित्ये सति तदेककामत्वे तदीयत्वं भवतीति यावत्फलेप्साराहित्यं करणं तदीयत्वसमर्थने उक्तम्, तज्जन्यं तदीयत्वसमर्थनं नैष्कर्म्यम्। तदित्थम्। कर्मणा कर्मनिर्हारो नैष्कर्म्यं निर्हारकं कर्म। अकामस्याप्तकामस्य यावत्फलेप्साराहित्यं भवति तदन्वाप्तकामस्याविहितं विहितं दास्यं भवति। "आदरः परिचर्यायाम्" इत्येकादशैकोनविंशे कथनात्। कर्मनिर्हारकं कर्म। भक्तित्वाच्च। "केचित्केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति" इतिवाक्यात्। तच्च नैष्कर्म्यं सन्यासः। कर्मसंन्यासयोगाध्याये "त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः। कर्मण्यभिप्रवृत्तोपि नैव किञ्चित्करोति सः। निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः। शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्। यदृच्छालाभसन्तुष्टो। द्वन्द्वातीतो विमत्सरः। समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते। गतसङ्गस्य मुक्तस्य ज्ञानवस्थितचेतसः। यज्ञायाचरतः कर्म समग्रं प्रविलीयते। ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना" इति। न चाधःसेवनं संसारजनकं "अधश्चोर्ध्वम्" इतिवाक्यविषयत्वात् अस्मदादिविषयवत् इत्यनुमानेन संसारजनकं दास्यमिति वाच्यम्। आचार्यमार्गत्वस्योपाधित्वात् "कृत्वातरन् वत्सपदं स्म यत्प्लवाः" इत्यस्य सुबोधिन्यनुगुणयत्किञ्चित्संसारवत्सेवनं साध्यव्यापकत्वस्थलम्। सेवनातिरिक्तविषयं साधनव्यापकत्वस्थलम्। एवं नैष्कर्म्यं सन्यास इत्यर्थः। उपबृंहितोयं सन्यास उपनिषत्सु तत्तदधिकारानुसारी ज्ञेयः।

२ पुष्टिभक्तानां समानम्। तन्मते पुष्टिभक्ताभावेऽपि स्वमतेऽतद्विरुद्धमित्यर्थः। मनः कल्पनं मानसी सेवा।

स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वमनुभवन् यो भजते, तस्य तदेव फलमिति यतो निर्णयः सम्पद्यते । "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति भगवद्वाक्याच्च । अत एव रहस्यभजनं लक्ष्यमुक्तम् । "अस्य भजनमि"तिपाठे तु निरुपधिभजनमेवलक्ष्यम् । उभयथापि "तद्धैतान्" इत्यादिभिः सिद्धो निर्णयस्तुल्यः । अतो निरपेक्षभजनेऽपि मुक्तिरेव फलमिति निर्णयस्य कर्तुमशक्यत्वात्, तथा च श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात्कतमो गरीयानिति संशये गूढाभिसन्धिः पठति—"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ३।३।३०॥ मुमुक्षोः सकाशाद्रहस्यभजनकर्तैव उपपन्न उपपत्तियुक्तः । तमेवोद्घाटयति तल्लक्षणार्थोपलब्धेरिति । तल्लक्षणो भगवत्स्वरूपात्मको योऽर्थः स्वतन्त्रपुरुषार्थरूपः, तदुपलब्धेः स्वीयत्वेन त्वत्प्राप्तेरित्यर्थः ।

ननु पुरुषोत्तमे सायुज्येऽपि सूत्रोक्तस्य हेतोरुपपद्यमानत्वात् कथं रहस्यभजनकर्तुरेवाधिक्यस्य सिद्धिरिति चेदुच्यते—यद्यपि पुरुषोत्तमे प्रवेशे तदानन्दानुभवो भवति, तथापि न प्रभोस्तदधीनत्वम्, भक्तितिरोभावात्, प्रत्युत वैपरीत्यम् । ननु मास्तु प्रभोस्तदधीनत्वं सायुज्ये, तथापि स्वरूपानन्दापेक्षया भजनानन्दस्याधिक्ये किं मानमिति चेच्छृणु—भजनानन्दस्य तत आधिक्यं तु "राजन् पतिर्गुरुरयं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किङ्करो वः । अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" । "दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।" "नारायणपरालोके" इत्युपक्रम्य "स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" इत्यादिवाक्यैरध्यवसीयते । अत्र मुक्तिदातुरप्यदेयत्वेन भक्तेराधिक्ये भजनानन्दस्याधिक्यम् ।

---

१ ननु भजनेनानन्दो भजनानन्दः । अत्र फलसाधनयोरेकीकृत्य निरूपणात्कथं सायुज्यापेक्षमाधिक्यम् । किञ्च, किं शक्यतावच्छेदकमिति चेत्सत्यम्, भजनेनेत्यत्र न करणे तृतीया अपि तु "प्रकृत्यादिभ्य उपसंख्यानम्" इतिवार्तिके 'नाभेदे' तृतीया । फलत्वेनाभेदः । ननु किं साधनं फलरूपमिति चेत्, न, एकादशे मुक्तिफलप्रतिपादकं सुबोधिन्यां फलात्मकं साधनमाहेति परस्परानुकथनमित्यस्याभासेन तदुक्तसाधनानां फलत्वात् । तेन साधनभूतभजनाभिन्नानन्दपदस्य भजनानन्दस्य भजनानन्दत्वमपि शक्यतावच्छेदकम् ।

अत एव सामीप्यवाच्युपसर्ग उक्तः । तेन दासीत्वेन दासत्वेन लीलायां सुहृत्वेन प्रभुनिकटे स्थितिरुक्ता भवति । न च महत्पदार्थस्वरूपाज्ञानादल्प एवानन्दे यथा सर्वाधिक्यं मन्वानः पूर्वोक्तं न वाञ्छन्ति, तथात्रापीति वाच्यम्, दीयमानानामर्थानां स्वरूपाज्ञानासम्भवात्, अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात् । तदज्ञाने स्वर्गादित्रये तुल्यदर्शित्वासम्भवाच्च । "मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" इति वाक्ये भक्तेराधिक्यं स्पष्टमेवोच्यते । तस्मात् "यूनार्थजिघृक्षोः सकाशात् पूर्णार्थवान्महानिति युक्तमेवास्योपपन्नत्वम् । इममेवार्थं दृष्टान्तेनाह—लोकवदिति । यथा स्वाधीनभर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकं दीयमानमपि नोररीकरोति, तथेत्यर्थः । अथवा स भगवानेव लक्षणमसाधारणधर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः स एवार्थः स्वतन्त्रपुरुषार्थरूप इति । अग्रे पूर्ववत् । भगवत्प्राकट्यवानेव हि भक्तो भक्तत्वेन ज्ञायते इति तथा । एतेन ज्ञाप्यं हि ज्ञापकादधिकं भवति । एवं सति यज्ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्वफलरूपं तन्महित्वं कथं वक्तुं शक्यमिति सूच्यते ।

एवं चानेनाधिकरणेन श्रीमद्गोपालपूर्वतापिन्युपनिषद्वाक्यं विषयीकृत्यैव भक्तेः भक्तस्य चाधिक्यं प्रतिपाद्यते । अतोऽस्त्येवाणुभाष्ये श्रीमद्गोपालपूर्वतापिन्यपनिषद उपकारितेति ।

एवं मुक्त्यपेक्षया भक्तेराधिक्यं स्वतन्त्रपुरुषार्थत्वं च प्रतिपाद्य धारणादीनां श्रवणादीनां च समुदितानां फलसाधकत्वं प्रत्येकस्यैवेति निर्णीयते । तथाहि भगवान्भाष्यकारः—"अथर्वणोपनिषत्सु पठ्यते "परब्रह्मैतत् यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवति" इति । तत्र धारणादीनां समुदितानामेव मुक्तिसाधकत्वम्, उत

---

"साधनानामसिद्धवदावृत्तिः कर्तव्ये"ति सुबोधिन्यां फलदशायामपि साधनावृत्तेः । यादृशं साधनं तदुक्तं भजनानन्दत्वं वा शक्यतावच्छेदकं भजनं तादृशानन्दे तात्पर्यग्राहकम् । लाघवात् ।

प्रत्येकमपीति भवति संशयः। अत्र धारणादिसाधनकलापमुक्त्वा फलमुच्यते इति समुदितानामेव मुक्तिसाधनत्वम्। उपलक्षणं चैतत्। श्रवणादिनवविध-भक्तीनामप्येवमेव तथात्वमिति पूर्वपक्षे, सिद्धान्तमाह—"अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्" ३-३-३१ अनियम इति समुदितानामेव तेषां फलसाधकत्वमिति नियमो नास्तीत्यर्थः। अत्रोपपत्तिमाह—सर्वासामविरोध इति। "चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेः" इति श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते। "पञ्चपदीं जपन्नि"त्याद्युक्त्वा "ब्रह्म सम्पद्यते ब्रह्मसम्पद्यते" इति श्रुत्या कीर्तनमात्रस्य तथात्वमुच्यते। तथा च प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः स्यात्। एवं सति "परब्रह्मैतत् यो धारयति" इत्यादिषु "सोऽमृतो भवती"तिपदं प्रत्येकं सम्बन्ध्यत इति ज्ञेयम्।

ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्य तज्जनकत्वम्, एवमत्राप्येकैकस्य चिन्तनादेस्तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषामिति चेत्, मैवम्, योऽर्थोयत्प्रमाणैकसमधिगम्यः, स तेन प्रमाणेन यथा सिद्ध्यति, तथा मन्तव्यः। दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु; प्रकृते तु तेषां तथात्वमलौकिकशब्दैकसमधिगम्यम्। श्रुतिस्तूक्तैव। नचोक्तन्यायः श्रुतिष्वपि तात्पर्यनिर्णायको भवतीति वाच्यम्, अलौकिकेर्थे लौकिकस्यासामर्थ्यात्। अन्यथा ब्रह्मणा मनसैव प्रजनने निषेकादिकमपि कल्प्येत। स्मृतिरपि "केवलेन हि भावेन गोप्यो गावः खगा मृगाः। येन्ये मूढधियो नागाः सिद्धामामीयुरञ्जसा।" "एतावान्साङ्ख्ययोगाभ्याम्" इत्युपक्रम्य "अन्ते नारायणस्मृतिः" इत्यादिरूपैवमेवाह। इममेवार्थं हृदि कृत्वाह सूत्रकारः शब्दानुमानाभ्यामिति। एतेन सूत्रकारस्यान्योप्यनुशयोऽस्तीति भाति। यत्रोक्तसाधनस्तोमसम्पत्तिरेकस्मिन्भक्तेऽस्ति, तत्रैकेनैव मुक्तावितरसाधनत्वबोधकश्रुतिविरोधाच्छ्रवणकीर्तनस्मरणानां मुक्त्यव्यवहितपूर्वक्षणे युगपदपि सम्भवादन्यथासिद्धिसम्भवे विनिगमकाभावादेकेनैव मुक्तिरिति न

नियमः । अतः प्रत्येकसाधकत्वबोधकानां सर्वासां श्रुतीनां मिथोऽविरोधः । तर्ह्येकत्र तथात्वे सर्वत्रैव तथास्त्वित्याशङ्क्य तत्र बाधकमाह—शब्दानुमानाभ्यामिति । पूर्ववत् । तत्र प्रत्येकमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः । यत्र प्रत्येकमपि तथात्वं, तत्र किमुवक्तव्यं समुदितानां तथात्व इति भावः । तेन श्लिष्टः प्रयोगमिति ज्ञेयम् "।

एवं सुस्पष्टैवास्या उपनिषदो भाष्योपकारितेति नेत्रे विस्फार्य द्रष्टव्यम्, इतः परमनया उपनिषदा मूलस्वरूपनिर्धारो भवतीति पण्डितपुरन्दराः श्रीमत्पुरुषोत्तमचरणाः, प्रहस्तवादे "गोपालतापनीयेऽपि प्रथममेव "कृष्णः कस्मात्" इति प्रश्नमुपक्षिप्य 'कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति नाम निरूप्य, निराकारताव्यावृत्यर्थं तादृशे नमनातिरिक्तं कर्तुमशक्यमिति सिद्धान्तज्ञापनार्थं च, 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे' इति मन्त्रेण रूपलीलावेदान्तवेद्यत्वविद्यादातृत्वान्तर्यामित्वकथनपूर्वकमादावेव नत्वा, तस्य स्वरूपस्य शुद्धत्वं बोधयितुं 'मुनयो ह वै ब्राह्मणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं विज्ञातं भवति केनेदं संसरति' इति मुनीनां वेदार्थवेत्तॄणां परस्य मुख्यं स्वरूपं जिज्ञासूनां वक्ष्यमाणहैरण्यशब्दवाच्यं ब्रह्मज्ञं ब्रह्माणं प्रति परदेवताविषयकं प्रथमं, तत्रापि ब्रह्मदृष्ट्या आवेशादिना वा तत्कथने रूपान्तरेऽपि तस्य प्रतिपत्तिर्भवति, परं तत्रौपचारिकं परत्वमिति निर्व्याजं परत्वं यत्र तज्ज्ञातुं 'भीषास्माद्वातः पवते' इति तैत्तिरीयाद्युक्तलक्षणकस्वरूपविषयकं द्वितीयं, तदपि सोपाधिकं चेति निष्कृष्टं ज्ञातुं 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति' छान्दोग्योक्तलक्षणकाद्वैततत्स्वरूपविषयकं तृतीयं, यदि सोपाधिकं कथं तर्ह्यद्वैतम् ? यदि मिथोपाधिः कथं तर्हि संसार इति संसारनिवर्तकाद्वैतस्वरूपज्ञानार्थं संसारविषयकं तुरीयमित्येवं वस्तु याथात्म्यज्ञानाय चतुरः प्रश्नानुपक्षिप्य, 'तदुवाच ब्राह्मणः श्रीकृष्णो वै परमं दैवतं गोविन्दान्मृत्युर्बिभेति । गोपीजनवल्लभज्ञाने-

नाखिलं ज्ञातं भवति स्वाहेत्यनेनेदं संसरति' इत्युत्तरिते, तेषां भेदवादसन्देहात् 'कः कृष्णो गोविन्दः कोसाविति गोपीजनवल्लभः कः का स्वाहा' इति पुनः प्रश्ने तेषामज्ञानमवगत्य, तच्च पापादिति तानुवाच ब्राह्मणः 'पापकर्षणो गोभूमिवेंदविदितो वेदिता गोपीजनाविद्याकलाप्रेरक' इति। पापं कर्षतीति कृष्णः। गोपदं च भूवाचकं वेदाख्यवाग्वाचकं चाभिप्रेत्य तदुभयविदितो लोकवेदप्रसिद्धः पुरुषोत्तमो गोविन्दः 'गोप्यो गाव ऋच' इतिकृष्णोपनिषच्छ्रुतेर्गोपीजनात्मिका या आसमन्ताद्विद्या तत्कलायाः कौशलस्य स्वाश्रितकृतार्थीकरणरूपस्य प्रेरको गोपीजनवल्लभ इति नामानि निरुप्य तन्माया चेति स्वाहापदवाच्यां संसारिकां मायां चोक्त्वा, तस्या मिथ्यात्वस्य द्वैतस्य च वारणाय इति 'सकलं परं ब्रह्मे'त्यद्वैतमुक्त्वा एतादृशाद्वैतस्वरूपध्यानकीर्तनभजनैर्मुक्तिमाह—'एतद्यो ध्यायति रसति भजति सोऽमृतो भवति' इति। एवं प्रथमखण्डेन पूर्वोक्तभेदादिसन्देहनिवृत्तावपिध्येयस्वरूपसन्देहानिवृत्त्या साधनस्वरूपसम्यग्ज्ञानाभावेन च 'ते होचुः किं तद्रूपं किं रसनं कथं वाहो तद्भजनं सर्वं विविदिषतामाख्याही'ति पुनः प्रश्ने 'तदुहोवाच हैरण्यो गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितम्। तदिह श्लोका भवन्ति, सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्। द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्। गोपगोपाङ्गनावीतं सुरद्रुमतलाश्रयम्। दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम्। कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः।' इति स्वरूपमुक्त्वा, 'तस्य पुनरि'त्यादिना रसनं, भक्तिरस्य भजनं तस्य च स्वरूपमुक्त्वा ततः 'कृष्णं सन्तं' इति मन्त्रद्वयेनानेकधा यजनाद्युक्त्वा, अन्यच्च तत्प्रश्नानुसारेण साधनान्तरादिकमुक्त्वा, उपसंहारे 'इति होवाच हैरण्य इति मुनि ब्रह्मसंवादं समाप्य, अमुं पञ्चपदमावर्तयेद्यः सयात्यनायासतः केवलं तत्। अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्' इति मन्त्रेण कीर्तयितृणामनायासेन तत्प्राप्तिं तस्य विरुद्धधर्माश्रयत्वं वागादिदेवागम्यत्वं चोक्त्वा, तस्मात्कृष्ण एव परो देव इति पूर्वसंवादोक्तान्मन्त्रोक्ताच्च हेतुजातात्सावधारणं कृष्णस्य परदेवत्वमुपसंहारेऽपि निगमयामास 'तं ध्यायेत्तं रसेत्तं भजेत्' इति, ॐतत्सदिति

ध्यानादिकं विधाय निरुपाधिकस्यैव तादृग्बोधनायान्ते ब्रह्मनिर्देशं चाह" इत्याहुः। तेनास्या उपनिषदः सर्वथैवोपकारिता सिद्धेति दिक्।

ननु श्रीमद्गोपालतापिन्यादीनां यदि स्वीक्रियेतोपकारित्वं, तदा श्रीमत्पुरुषोत्तमादिभिर्विद्वद्भिः कथं नेयं व्याख्यातेति चेन्न सर्ववेतृश्रीमद्योगिगोपेश्वरैः पूर्वमेवेयं व्याख्याता। तथा च रश्मौ "श्रुत्यर्थस्तु टीकायां द्रष्टव्यः" इति भाष्यप्रकाशरश्मिपरिबृंहितेऽणुभाष्ये तृतीयाध्याये ३०६ पृष्ठे द्रष्टव्यम्। परन्तु नेयं टीका कालदोषादृष्टिपथमायातेति। यद्यपि तैर्व्याख्याता तथाप्यस्याच्छान्दोग्यप्रथमाध्यायवत् कठिनतमत्वाभावात्सरलत्वाच्च भाष्योपरिटीकालेखनप्रयासस्तु व्यर्थ एव। अत्रापि सावधानतया श्रोतव्यम्। पुष्टिमार्गीयमूलस्वरूपनिर्णयो भक्तिलक्षणादिकं चानयैवोपनिषदा भवति, तत्र बहूनां पण्डितानामपि मतिः कुण्ठिता भवति, अतएव तद्व्याख्यानावश्यकताऽङ्गीकार्यैव। टीकायां तु "श्रीकृष्णचन्द्राभ्युदया"ख्ये नाटके तट्टीकायां चोद्धृतवाक्यानां यथावत्सामञ्जस्यं निरूपितम्, नैव तस्य परिहाराय प्रवृत्तः कश्चिद्विद्वान् गोस्वामी वा अद्यदिनं यावत्। कठिनतमस्य छान्दोग्यप्रथमाध्यायस्य भाष्ये मायावादप्रविष्टो भाष्यकार इति तु प्रतिपादयितुं शक्नोत्ययं जनः, परमत्र विस्तरभिया विरम्यते।

एवं श्रीमद्गोपालपूर्वतापिन्युपनिषद्भाष्यकृद्भिः श्रीमदनिरुद्धाचार्यचरणैर्बहूनां विप्रतिपत्तीनां निरासः कृतो ब्रह्मामृत भाष्ये पीयूषलहर्यां च। एतैर्गोस्वामिभिरेतस्मिन्कलिकाले प्रवचनादिना, ग्रन्थव्याख्यानादिना च सुरसृष्टिसमुद्भूता भागवता भक्ता बहूपकृताः। एत एव साम्प्रतिका ग्रन्थकाराः श्रीमद्वल्लभाचार्याणां वंशेऽद्वितीयतया विराजन्ते।

ग्रन्थस्यास्य मुद्रणव्यवस्थार्थमाज्ञप्तेन यथामति मयैतत् संशोधनादिकं निखिलमकारि। ग्रन्थेत्राक्षरसंयोजकस्य दोषात्संशोधकस्य जीवसुलभदोषवत्वाच्चाशुद्धिदोषो नयनपथमागच्छेद्विद्वद्भिरवश्यमेव क्षन्तव्यमिति प्रार्थयन् विरमति—

मुम्बई
अधिकश्रावणशुक्ला प्रतिपद् १९८४

विदुषां किङ्करो
हरिशङ्करः



सम्प्रति विराजमान गोस्वामिबालकोमें सर्व प्रथम ग्रन्थकार—

**गोस्वामी श्रीमदनिरुद्धाचार्यजी महाराज**

शुद्धाद्वैतकेसरी, शुद्धाद्वैतभूषण, शुद्धाद्वैतसहस्रांशु, शुद्धाद्वैतवाचस्पति, वेदान्तसुधाकर, वेदान्तविद्यालङ्कार इत्यादि ।

॥ श्रीमन्मन्मथमन्मथो विजयते ॥

॥ श्रीबालकृष्णो विजयते ॥

# ॥ श्रीमद्गोपालपूर्वतापिन्युपनिषद् ॥

॥ ब्रह्मामृतभाष्येण पीयूषलहर्या च समुपबृंहिता ॥

---

## ॥ ब्रह्मामृतभाष्यम् ॥

अये कमललोचनं सरसराधयालिङ्गितं
चतुर्भुजमचिन्त्यमप्रमितघोषनारीवृतम् ।
स्वकीयजनरक्षकं निखिलवेदवेद्यं परम्
प्रभूतगुणभूषितं मदनमोहनाख्यं रसम् ॥ १ ॥
नमद्विबुधमण्डलीमुकुटरत्नभूषास्फुरत्
प्रभाधवलितं पदं त्रिविधतापहं शांतमम् ।
विमुक्तजनसेवितं परमभक्तिगम्यं फलं
नतोऽस्मि पद्मुपाङ्गनाहृदि विराजितं श्रीहरेः ॥ २ ॥

## ॥ पीयूषलहरी ॥

प्रसन्नमुखपङ्कजस्फुरितकुन्ददन्तच्छटा-
विसर्पमधुरेऽधरे मुरलिकां दधानः प्रियः ।
निरोधयति सुस्वरैः सकलसात्वतां मानसं
स रोधयतु मे मनो मदनमोहनाख्यो रसः ॥ १ ॥
मृत्स्नां खादसि नो वदन्त्यनुचराः सर्वे मृषाशंसिनः
सत्यस्त्वं यदि तात पङ्कजमुखं व्यादेहि तूर्णं तव ।
इत्थं मातुरनुज्ञया स्ववदने योदर्शयल्लीलया
विश्वं विश्वमनोहरं सुखकरं तं बालकृष्णं भजे ॥ २ ॥

भाष्यम्

लास्यं करिष्यसि यदैव तदैव देयं
गव्यं, मयेतिवचनैर्व्रजवासिनीभिः ।
सन्नर्तितः सकलवेश्मसु योऽद्वितीयस्तं
बालकृष्णमनिशं मनसा स्मरामि ॥ ३ ॥
श्रीमद्वल्लभपादपुष्करजनुर्मायादृशां दुर्गमं
शुद्धाद्वैतसुगन्धभारभरितम्, कृष्णेनैसंलक्षकम् ।
भक्तस्वान्तसुषट्पदैकनिलयं दैवैश्च हंसैर्वृतं
लभ्यं दीनतया विराजतु सदा चेतस्तडागे मम ॥४॥

पीयूषलहरी

अर्भकैर्मित्रैर्यो हृदयवहलध्वान्तनिकरो
न नष्टोजीवानां बहुजननकारी दृढतरः ।
मुदा तूर्णं चूर्णं तमपि विदधुर्वल्लभवरान्
नुमस्तानाचार्यान् विबुधवरवन्द्यान्प्रणयतः ॥ ३ ॥
यः श्रीवल्लभवंशवार्धिविकसज्जैवातृकः पुण्यभूः
शुद्धाद्वैतनिरूपणे भगवतो ज्ञानावतारोऽपरः ।
श्रीमद्बालककृष्णसेवनरतः श्रीविठ्ठलेशात्मज-
स्तं तातं मुरलीधरं सुमनसा वन्देऽवदातंमुहुः ॥ ४ ॥
श्रीमद्वल्लभवंशकौस्तुभमणिर्विद्यावतामग्रणी-
र्गोविन्दाङ्घ्रिसरोजसेवनधनो गोस्वामिचूडामणिः ।
यः श्रीभागवतामृतं निजजनेऽवर्षीदजस्रं हितम्
श्रीमन्तं पुरुषोत्तमं निजगुरुं दीक्षाप्रदं नौम्यहम् ॥ ५ ॥
वेदान्ततत्त्वं दययोपदिश्य योभून्मदीयोदयहेतुभूमिः ।
श्रीवल्लभाचार्यपदैकनिष्ठस्तं मग्नलालं मनसा स्मरामि ॥ ६॥

---

१ तारकादित्वादितच् । २ कृष्ण एवेनः सूर्य इति यावत् । ३ अस्मत्पितृव्यम् ।

# ॐ भद्रं कर्णेभिः शृणुयाम देवाः,

भाष्यम्

तत्रादौ भगवत्सेवायां तत्तदिन्द्रियप्रेरणाय तेषां बुद्धेश्च परब्रह्मण एव प्रेरकत्वेन तं प्रार्थयति भद्रमिति। देवा इति। हेदेवाः कर्णेभिरस्मदीयश्रोत्रैर्मङ्गलस्वरूपं भगवद्गुणानुवर्णन-

पीयूषलहरी

श्रीमद्गोपालपूर्वतापिन्युपनिषदं व्याचिख्यासुर्ब्रह्मामृतभाष्येण प्रथमं शान्तिमन्त्रं विशदयति भगवत्सेवायामिति। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः, ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति-वाक्यात् षडैश्वर्यवतो भगवतस्तनुवित्तजमानस्याख्यायां भक्तौ, भजधातोः सेवार्थकत्वेन भगवति सुदृढस्य सर्वतोऽधिकस्य स्नेहस्यैव सेवाविषयत्वम् "धात्वर्थ उत्तमा सेवा स्नेहोऽर्थः प्रत्ययस्य च।" इति वाक्यात्तस्याम्। तत्तदिन्द्रियप्रेरणायेति। भगवतः सर्वेन्द्रियैरन्तःकरणैरात्मना च सेव्य-त्वेन तानि तत्र प्रेरयितुमित्यर्थः। ब्रह्मण एवेति। "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्यादिवाक्यैः समस्तश्रुतिसुन्दरीसमूहसंसेव्यमानचरणयुगलस्य भगवतः श्रीकृष्णचन्द्रस्येत्यर्थः। प्रेरकत्वेनेति। "हृषीकेशोहमीशानो वरदो लोक-भावनः" इति भारतीयशान्तिपर्वद्विपञ्चाशदधिकत्रिशततमाध्यायवाक्यात्। हृषीकाणीन्द्रियाणि तेषामीशः स्वामी यत्र यत्र प्रेरयति तत्र तानि गच्छन्ति "बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु" इति श्रीमदाचार्यचरणवा-क्यात्। "जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनाऽपि देवेन हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इति वाक्याच्च नोदकत्वेनेत्यर्थः। तं प्रार्थयतीति। समस्तनिगमागमप्रसिद्धं पुरुषोत्तमं प्रेरणाय स्तौति। हे देवा इति। अत्र मान्यार्थे बहुवचनम्। दिवुधातोर्दशविधार्थकत्वेन देवपदेन दशविधलीलाविशिष्टस्यैव ग्रहणम्।

भाष्यम्

रूपशास्त्रं शृणुयाम श्रोतुं समर्था भवामो यथा तथा भवद्भिर्विधेयम् । तत्र प्रतिबन्धकत्वेनास्माकं बाधिर्यादिकं न भवेदिति । भगवदीयैः सर्वेन्द्रियैरन्तःकरणैरात्मना च भगवान् सेव्यः । " श्रुतिं चकाराच्युतसत्कथोदये " इति भागवत-

पीयूषलहरी

श्रोत्रैरिति । मन्त्रे कर्णेभिरितिप्रयोगश्छान्दसः । मङ्गलस्वरूपमिति, "तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहं, श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः" इति भागवतवाक्यात् । भगवद्वियोगे भगवत्कथैव भक्तान्रक्षति, संयोगे प्रभुरिव । तस्या अपि तत्र षड्भिर्विशेषणैः षडैश्वर्यवत्ताया निरूपणात् । भगवद्गुणानुवर्णनमित्यारभ्यास्माकमित्यन्तं स्फुटम् । बाधिर्यादिकमिति । तत्तत्त्वे तीव्रतरविरहभावस्य सर्वोपमर्दकत्वेनात्यन्तिकदुःसहत्वाद्रक्षकाभावेन देहपाते संयोगसुखानुपलब्ध्या सकलमनोरथपूर्त्यसम्भवोतस्तथाभावे रक्षणश्रवणसाधनप्रार्थनं पूर्वमेव । भगवदीयैरिति । कर्तृ, करणं, विशेषणं वा । भगवति सर्वात्मनिवेदिभिरित्यर्थः । सर्वेन्द्रियैरिति । "स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ।। मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेङ्गसङ्गम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्यां रसना तदर्पिते ।। पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामञ्च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रयारतिः" इतिनवमस्कन्धीयचतुर्थाध्यायवचोभिर्भगवान्सेव्यः । अन्तःकरणैरिति । मनोबुद्धिचित्ताहङ्कारभेदेनान्तःकरणस्य चतुर्विधत्वात्तैः । आत्मनेति । शुद्धजीवेन । सेव्य इति । सेवितुं योग्यः, भगवत्सेवायास्तस्य सहजधर्मत्वात् ।

नन्वन्यानेकसाधनसत्त्वेऽपि कथं तत्सेवनमेव सहजो धर्म इति चेन्न, इतरेषान्त्वेतत्सहकारिधर्मत्वात् । तत्रापि केषांचित्कामनापरत्वं केषांचिच्च नैमित्तिकत्वान्न सहजत्वम् । तथा हि " यथाग्नेः क्षुद्रा विस्फुलिङ्गा

## भद्रं पश्येमाक्षभिर्यजत्राः ।

भाष्यम्

वाक्यात् । यजत्रा भगवद्यजनशीला वयं भक्ताः । अक्षभिश्चक्षुर्भिर्भद्रंभगवतो मङ्गलं स्वरूपं पश्येम दर्शने समर्था भवामः, भगवद्दर्शनप्रतिबन्धरूपमन्धत्वादिकमस्माकं कदा-

पीयूषलहरी

व्युच्चरन्ति" इति श्रुतेः, "ममैवांशो जीवलोके जीवभूतः सनातनः" इति गीतावाक्याच्च तस्य ब्रह्मांशत्वेन "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति वैयासन्यायाद्भगवदिच्छया षडैश्वर्यतिरोहिते, जाते च माया सम्बधे बन्धविपर्ययप्राप्तौ, अन्यथा ज्ञानम्; तन्निवृत्तये च "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति गीतावाक्याच्छरणगमनमेव मुख्यं साधनम्; तेन च तन्निवृत्तौ शुद्धत्वेन व्यवहारः । किञ्च " यो यदंशः स तं भजेत् " " कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः । याति तत्साम्यतां राजन्पूर्वरूपमसन्त्यजन् " इत्यादिवाक्यैस्तद्भजनेनैव स्वरूपलाभस्य निरूपणात् । अतएव "ते तु ब्रह्महदं नीता मग्नाः कृष्णेन चोद्धृताः" इति वचसा भागवतेऽपि ब्रह्मानन्दादानन्दाधिक्यं भजने निरूप्यते ।

तत्र प्रमाणं दर्शयति श्रुतिमिति । एवं विप्रयोगे तत्प्राप्त्यै भगवत्कथाया एव भक्तदेहरक्षणसाधनत्वेन बाधिर्यादिकस्य च तत्प्रतिबन्धकत्वेन पूर्वं तदभावं प्रार्थ्य, संयोगे तद्दर्शनसाधनं प्रार्थयत इत्याशयेनाह— भगवद्यजनशीला इति । यजिधातोः पूजार्थकत्वेन तदेवास्माकं शीलं स्वभावस्त एव भक्ताः स्वभावत एव तत्सेवनेन परिसमाप्तसर्वार्थाः । चक्षुर्भिरिति, चक्षुरिन्द्रियैः । भगवत इति, षडैश्वर्यवतो हरेः । मङ्गलं नयनोत्सवं स्वरूपं विग्रहम् । दर्शन इत्यारभ्य प्रतिबन्धरूपमित्यन्तमुत्तानार्थम् । अन्धत्वादिकमिति । तत्सत्वे संयोगेऽपि दर्शनाभावाज्जीवनवैयर्थ्यं भवेदतस्तत्र चक्षुषोरत्यन्तमावश्यकत्वेन तत्प्रार्थयति ।

भाष्यम्

चिदपि न भवेत्तथा विधेयम् । "मुकुन्दलिङ्गालयदर्शने दृशौ" इति भागवतवाक्यात्तदिन्द्रियस्य तद्दर्शनादेव तत्त्वम् । अन्यथा बर्हायितत्वमेव "बर्हायिते ते नयने नराणामि"ति भागवतवाक्यात् । "अक्षण्वतां फलमिदं न परं विदामः" इति वाक्याच्च । देवेति "दिवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा देव" इत्याह निरुक्तकारः । स्थिरैर्वैषयिकतत्तद्व्यापाररहितैरङ्गैरवयवैस्तुष्टुवांसो ब्रह्म स्तोतारो वयं

पीयूषलहरी

तत्र प्रमाणं लक्षयति-मुकुन्देति । तदिन्द्रियस्येति चक्षुरिन्द्रियस्य । तद्दर्शनादेवेति भगवद्दर्शनादेव । तत्त्वमिति चक्षुष्ट्वमित्यर्थः । अन्यथेति, तद्दर्शनाभावे । बर्हायितत्वमिति । मयूरपिच्छनेत्रवद्वैयर्थ्यमेव । तत्र प्रमाणमाह–बर्हायिते त इति । द्वितीयमप्याह–अक्षण्वतामिति । सर्वेन्द्रियवतां चक्षुष्मतां वा सर्वेषां प्राणिनामित्यर्थः । एवं संयोगविप्रयोगभेदेन द्विविधमपि सुखं प्रार्थ्य तत्प्राप्तावप्यायुर्विना सेवाकरणासम्भवात्तस्यावश्यकत्वेन तदर्थं तं स्तौतीत्याशयेनाह–हे देवेति । दशविधलीलाविशिष्ट । दशविधलीलाविशिष्टत्वं तु "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति श्रुत्या भक्तानां कामभोजनार्थं क्रीडाकरणात्क्रीडायामेव जयेच्छाकरणाद्भक्तैः सह व्यवहारकरणाद्भक्तेषु स्वमाहात्म्येच्छादिद्योतनात् "न पारयेऽहं निरवद्य संयुजां स्वसाधुकृत्यं विबुधायुषापि वः । या मा भजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना । न त्वादृशीं प्रणयिनीं" इत्यादिवाक्यैः स्तुतिकरणाद्भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात्तेष्वेव भक्तिमदकरणात्ते स्वप्नेऽपि प्रियमेव पश्यन्तीति स्वप्नकरणात्तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटगमनाच्चेति श्रीमत्प्रभुचरणाः । वैषयिकतत्तद्व्यापाररहितैरिति । केवलं ब्रह्मण्येव निरुद्धैरित्यर्थः ।

स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितं यदायुः
ॐ शान्तिः शान्तिः शान्तिः ।

भाष्यम्

तनूभिर्देहैः, यच्छास्त्रप्रसिद्धम् ।

पीयूषलहरी

शास्त्रप्रसिद्धमिति वेदादिभगवच्छास्त्रप्रसिद्धम् ।

तद्यथा—त्रिपादविभूतिमहानारायणोपनिषदि "सर्वेषामधिकारिणामनधिकारिणां भक्तियोग एव प्रशस्यते । भक्तियोगो निरुपद्रवो भक्तियोगान्मुक्तिर्बुद्धिमतामनायासेनाचिरादेव तत्त्वज्ञानं भवति तत्कथमिति भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान्सर्वान् परिपालयति सर्वाभीष्टान्प्रयच्छति मोक्षं दापयति चतुर्मुखादीनां सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते कारणेन विना कार्यं नोदेति भक्त्या विना ब्रह्मज्ञानं कदापि न जायते तस्मात्त्वमपि सर्वोपायान्परित्यज्य भक्तिमाश्रय भक्तिनिष्ठो भव, भक्त्या सर्वसिद्धयः सिद्ध्यन्ति भक्त्यसाध्यं न किञ्चिदस्तीति" श्रूयते । अस्या अर्थस्तु—सर्वेषामिति । "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इति गीतावाक्यात्सुदुराचारवत्त्वेऽपि परित्यक्तेतरभजनस्य स्वभक्तस्य धर्मात्मत्वभवनपूर्वकशान्तिप्राप्यत्वकथनात्सर्वेषामनन्याभक्तिरेव सर्वतो गरीयसी ।

नन्वनन्यस्यात्मभावत्वेनैवेत्यर्थो युक्तः "अन्योसावन्योऽहमस्मि" इति न स वेद पशुरेव स देवानाम्" इत्युपनिषद्वचसैककण्ठ्यमस्य वचसः स्पष्टमाटीक्यते । शङ्कराचार्यैः "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये"ति श्लोकव्याख्यायामनन्येति पदस्यात्मविषयेति विवृतत्वात् । "अनन्याश्चिन्तयन्तो माम्" इत्यत्राप्यनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्त इत्यपि विवरणाच्च । किञ्च येभ्योऽन्यो न विद्यत इत्यनन्याः ।

पीयूषलहरी

अहमेव "वासुदेवः सर्वात्मा न मत्तोन्यत् किञ्चिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं भावयन्त" इत्यानन्दगिरिणापि तथा निरूपणात्, युक्तं चैतत्, भक्तेर्निरतिशयप्रेमविषयत्वात्तदास्पदत्वं त्वात्मनोऽन्यत्र न सम्भवति । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति प्रियब्राह्मणवाक्यैः प्रतिपादितत्वादनन्यभक्तेरयमेवार्थो युक्तः, नत्वन्योपासननिषेधपर इति चेन्न; अनन्यपदस्यान्यभजननिषेधार्थकत्वात् ।

तथाहि—वेदादिशास्त्रोक्तसाधनस्तोमस्य निर्विचिकित्सितमीमांसाद्वयवित्यनन्तरमनुष्ठानेन प्राप्तवैराग्यादावात्मबोधस्य सम्भवः । अत्राधिकारिणः सुदुराचारवत्वेऽप्यनन्यभक्त्या क्षिप्रं धर्मात्मत्वस्य भाव्यत्वेन निरूपणात् । दुराचारवत्वस्य चात्मबोधापष्ठुत्वादन्यभजननिषेधार्थकत्वमेवानन्यपदस्यार्थः, आरम्भदशायामात्मज्ञानाभावात् । किञ्च भजनं भजनीयो भक्तश्चेति तत्त्वत्रयाधीनं भजनम् । तत्राहमेव सर्वात्मा वासुदेवो न मदन्यत् किञ्चिदस्तीति भावनया भक्तौ को भजनीयः, कश्च भक्तः, किं भजनमिति तत्त्वत्रयाभावाद्भक्तेरेवोच्छेदप्रसङ्गः । तथापि द्रुहिलतया तथाङ्गीकारे गीताशास्त्रस्य श्रीकृष्णप्रकृतत्वेन वासुदेवोऽहं सर्वात्मा न मत्तोन्यदस्तीति वृत्त्यैव तत्कर्तव्यत्वप्राप्तावितरभजननिषेधस्त्वनुक्तोऽपि प्राप्त एव तद्वृत्तावन्यस्फूर्त्यभावात्; स्फूर्तावात्मभावाभावाच्च, "अन्योसावन्योऽहम्" इति श्रुतिरपि भेदभावनां निन्दति, नतु "यो ह खलु वावैतस्यांशोऽयं यश्चेतनमात्र" इति मैत्रायण्युपनिषच्छ्रुत्या, व्युच्चरणश्रुत्या च, "ममैवांशो जीवलोके" "अंशो नानाव्यपदेशादि"ति गीताव्याससूत्रादिसमस्तशास्त्रोक्तमंशत्वं निवारयति । अभेदभावस्तु सिद्ध एव, अंशांशिनोरभेदात् । प्रियब्राह्मणवाक्यमपि न जीवात्मपरम्, किन्तु ब्रह्मपरमेव । मैत्रेय्या तत्रामृतत्वसाधनस्यैव पृष्टत्वात् । याज्ञवल्क्येनाऽपि ब्रह्मार्थमेव पदार्थजातस्य प्रियत्वं निरूप्य तस्मिन् लयकथनेन मोहाभावस्य प्रतिपादितत्वात् । एवं परितो विमृष्यमाणे शास्त्रेऽनन्यपदस्यान्योपासननिषेधपरत्वमेवसिद्ध्यति ।

पीयूषलहरी

ननु तथात्वे "तमेव शरणं गच्छे"ति वाक्ये भगवत एव शङ्करशरणगमनोक्तेः कथं सङ्गतिरिति चेन्न, तस्य परोक्षकथनत्वात् । "परोक्षप्रिया हि देवाः" इति श्रुतेः । पूर्वं "पुरुषः स परः पार्थे"त्यादिषु शङ्कराचार्याननुसरन्निह तान् कथमतिवर्तसे ? अत्र तावत्तैस्तदेवेश्वरं शरणमाश्रयं संसारार्तिहरणार्थं गच्छाश्रय सर्वभावेन सर्वात्मना हे भारत ! ततस्तत्प्रसादादीश्वरानुग्रहात्परां प्रकृष्टां शान्तिमुपरतिं मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यमित्युक्त्वा विष्णोरेव प्रतिपादनात् ; नतु तमिति शङ्करविशेषणमिति शङ्क्यम्, तच्छब्दस्य पूर्वपरामर्शित्वात् । शङ्कराचार्यैरेव "ईश्वरः सर्वभूतानामि"त्यत्र नारायणस्यैव निरूपणात् ।

प्रकृतमनुसरामः । भक्तियोग एवेति । " नायमात्माबलहीनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः " "तमुस्तोतारः पूर्व्यं यथाविद् ऋतस्य गर्भं जनुषापिपर्तन, आस्यजानन्तो नाम चिद्विवक्तन महस्ते विष्णोः सुमतिं भजामहे" "नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा " " पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया"इत्यादिनिगमागमवचनैः प्रशंसा विषयीक्रियत इत्यर्थः । भक्तियोगो निरुपद्रव इति । विद्यादिमार्गवद्विस्वरादिनाऽव्यङ्ग्यत्वादिदोषरहितोऽनर्थानापादकश्च, "धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह"इति भागवतवाक्यात् । भक्तियोगान्मुक्तिरिति । तथैव संसारतापशमनम् "ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधनम्"इति श्रीमदाचार्यचरणोपदेशात् । बुद्धिमतामिति । "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति गीतावाक्याद्भगवत्समासादितसंविदामितरसाधनस्तोममन्तरा तन्मनस्कतयैव सत्वरं भगवत्स्वरूपज्ञानं भवति । नचेदमक्षरज्ञानमिति शङ्क्यम्, "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्"इति गीतावचसाक्षर-

पीयूषलहरी

वित्यनन्तरमेवास्या उपलब्धेरुक्तत्वात् । तथा च "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति वाक्याद्भगवत्स्वरूपज्ञानस्यैव प्रतिपादितत्वात् । भक्त्यैव सर्वं कथं भवतीति पृच्छति—तत्कथमिति । तदुत्तरयति—भगवानिति । परमकृपासागरो जीवकृतसाधनानपेक्ष्यो लौकिकालौकिकेभ्यः स्वप्राप्तिप्रतिबन्धेभ्यः स्वभक्तान् रक्षतीत्यर्थः । "मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।" "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।" इत्यादिप्रमाणैस्तथैव निरूपितत्वात् । सर्वाभीष्टानिति । ननु तेषां "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति गीतोक्तं परिपालनमात्रं करोति । किन्तु स्वविषयकमनोरथानपि प्रयच्छति भक्तवत्सलत्वात् । मोक्षं दापयतीति । ननु केवलं मनोरथान् प्रयच्छति । किन्तु मोक्षं स्वसायुज्यमपि ददातीति भक्तोपरि महान् कृपाविशेषः सूचितः । स्वार्थे णिच् । अथवा णिचः प्रेरकत्वाङ्गीकारे रहूगणैतत्तपसा स्वाप्नं यातीति न चेज्यया निर्वपणाद्गृहाद्वा । नच्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेकम्" इति पञ्चमवाक्यान्महापुरुषद्वारा दापयतीत्यर्थः । ज्ञानिनां कर्मिणामपि भक्तिमन्तरा सायुज्याप्राप्तिं निरूपयति—चतुर्मुखादीनामिति । ब्रह्मादिसर्वामराणामन्येषां च विना विष्णुभक्त्येति । सर्वत्र व्यापनशीलस्य विष्णोर्भक्तिं विना । कल्पकोटिभिरिति । कोटिकल्पैरपि । मोक्षो न विद्यत इति । भगवत्सायुज्यं नास्तीत्यर्थः ।

सायुज्यालाभे हेतुं निरूपयति—कारणेन विना कार्यं नोदेतीति । यथा कारणं विना कार्याभावस्तथा भक्तिमन्तरा भगवत्स्वरूपज्ञानाभावस्तेन च सायुज्याभावः । एवं हेतुं निर्दिश्य तत्र प्रेरयति—तस्मात्त्व-

भाष्यम्

हितं जीवानां हितावहं सेवोपयिकमायुस्तद् व्यशेम विशेम प्राप्नुयाम इत्यर्थः। "तज्जन्मतानि कर्माणि तदायुरि"ति भागवतवाक्यात्सेवाकर्तॄणामेव जीवनसाफल्यमिति निष्कर्षः। एवं द्विविधप्रतिबन्धनिवृत्तिं प्रार्थ्य शान्तिं पठत्योमिति। प्रणवस्वरूपो भगवान्देवाधिदेवः शान्तिं विदध्यात्। त्रिरावृत्तिस्तस्याः

पीयूषलहरी

मपीति। यत् यत एवं ततस्त्वं ब्रह्मापि। सर्वोपायानिति मद्भक्तिव्यतिरिक्तान्परित्यज्य भक्तिमाश्रयेति "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु"इति गीतावाक्यान्मत्सेवां कुर्वित्याशयः। भक्तिनिष्ठो भवेति। सेवामनन्यवृत्त्या तत्करणवृत्तिमान् भव। आवृत्तिरन्यथा कलाभावबोधनाय। भक्त्या सर्वसिद्धय इति। भजनेनाणिमाद्या अपि सिद्धयोऽनिच्छतोपि समागच्छन्ति। भक्त्यसाध्याभावमाह—भक्त्यसाध्यमिति। नहि ब्रह्माण्डे भक्त्या किञ्चिदप्यसाध्यमिति श्रुत्यर्थः। जीवानां हितावहमिति। "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति"इति श्रुत्या ब्रह्मणश्चिदंशानां पथ्यमिव हितकृत्। सेवोपयिकमिति। सेवानुकूल्यसम्पादकम्। प्राप्नुयाम इति। भगवद्भजनरहितं फलविलम्बहेतुभूतं चिरजीवितं नास्माभिरपेक्ष्यत इति निगूढाशयः। तत्र प्रमाणत्वेन भागवतं दर्शयति—तज्जन्मेति। एतेन सच्चिरोहितस्य जन्मादीनां वैफल्यमेव। एवमिति। पूर्वोक्तप्रकारेण। द्विविधेति संयोगविप्रयोगभेदेन द्वैविध्यम्। प्रणवस्वरूप इति। प्रकर्षेण नवः प्रणव इति व्युत्पत्त्या भक्तानां नित्यनूतनमनोरथपूर्त्यै नवस्वरूपः। अथवा प्रकर्षेण सर्वाधिक्येन नूयते स्तूयते वेदादिभिरिति प्रणवः परब्रह्मस्वरूपः। गीतायां "ॐ तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्यत्र तथा

कस्मात् कृष्णः । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवा-

भाष्यम्

परमावश्यकत्वबोधनाय । उद्विग्नैः सेवायाः कर्तुमशक्यत्वात् ।

तत्रादौ कस्मात्कृष्ण इत्यनुयोगमुत्तरयन्कृष्णपदार्थमाह—कृषिर्भूवाचक इति । कृष् भूवाचकः सत्तानिवेदकः । णश्चाऽऽनन्द बोधकः । तयोरैक्यं यत्र तत्परं गणितानन्दादक्षरादुत्कृष्टं ब्रह्म

पीयूषलहरी

निरूपणात् । उद्विग्नैरिति । भक्तौ मनःस्थैर्यस्य परमापेक्ष्यत्वेनोद्वेगस्य तद्विरुद्धत्वेन बाधकत्वाच्छान्तिप्रार्थनेत्यर्थः । "उद्वेगः प्रतिबन्धो वा भोगो-वास्यात्तुबाधकम्" इत्यादिना त्रयाणां तत्त्वं श्रीमदाचार्यचरणैरुपदिष्टं नवरत्नेऽपि; तत्प्रकाशे च श्रीमत्प्रभुचरणैर्विशदतया प्रकाशितम् ।

एवं शान्तिं प्रार्थ्य कृष्णस्वरूपमाह—कृष्णपदार्थमिति । सर्वोत्कृष्ट-मिति । परब्रह्मेतियावत् । तल्लक्षणं तु निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्र तिपाद्यत्वम् । "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इति तत्त्वसूत्रात् । गीतायां-"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।" "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः" "अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे" इत्यादिवचनै-रक्षरेऽपि तथात्वादतिव्याप्तिस्तद्वारणायाऽऽत्मेति विशेष्यम् । अव्यक्त-पदवाच्यत्वं त्वक्षरस्य "अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम्" इति गीताप्रसिद्धमेव । तत्रैव च "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्यक्षरपदत्वमुक्त्वा, "यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्" इति पुरुषोत्तमत्वमुक्तम् । तत्राप्यक्षरादावतिव्याप्तिवारणायाक्षराद्भिन्नत्वं निवेशनीयम् । अथवा "सच्चिदानन्दत्वमेव परब्रह्मत्वम्" । नचाक्षरेऽति-व्याप्तिस्तस्य चित्प्रधानत्वात् । अथवा पूर्णानन्दत्वमेव तत्त्वम् । पूर्णत्व-मपरिच्छिन्नत्वम् । तच्च स्वरूपतो न परिमाणतः । तेन नाक्षरेऽति-व्याप्तिः । नापि सच्चिदानन्दसमूहात्मके जगति । तैत्तिरीये सैषा-

चकः, तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते । ॐ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरवे

भाष्यम्

कृष्णनाम्ना वैदिकैः कथ्यते इत्यर्थः । तं प्रणमति सच्चिदानन्दरूपायेति । प्राकृतरूपरहिताय । कृष्णाय श्रुतिप्रतिपादितपरब्रह्मणे । अक्लिष्टकर्मणे जीवानां सुखायैव सर्वकारिणे, परमकृपालुत्वात्, अथवा स्वेच्छयैव सर्वकारिणे । नहि तस्य लोकव-

पीयूषलहरी

नन्दस्य मीमांसेत्युपक्रम्य "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः" इति संख्यापरिच्छेदनिरूपणात् । तथा बृहदारण्यकेऽपि "ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दः" इति तादृशानन्दिनो लोकत्वेन निरूपितत्वात् । "इयदामननात्"इति वैयासन्यायाच्च । ततः परस्य तु"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"इति श्रुत्या चापरिच्छिन्नानन्दत्वेन प्रतिपादितत्वात् । तदेव च "गणितानन्दकं बृहत् । पूर्णानन्दोहरिस्तस्मात्"इति पद्ये श्रीमदाचार्यचरणैः कृष्णाश्रये निरूप्यत इति दिक् । यद्यप्येषा श्रुतिर्मुद्रितोपनिषत्पुस्तके न दृश्यते, तथापि नारायणविरचितदीपिकायामन्यत्राप्यदभ्रेषु प्रबन्धेष्वनेकसूरिभिः समादृतेत्यस्माभिरपि तथैव कृतम् । एवं कृष्णपदार्थं निरूप्य तन्नमनपूर्वकमग्रिममवतारयतीत्याशयेनाह—तमिति । प्राकृतरूपरहितायेति । अप्राकृताकारविशिष्टाय । "प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः" इति व्याससूत्रात् । परमकृपालुत्वादिति । "अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम" इति भागवतवाक्यात् । द्वितीयमप्यर्थमाह—अथवेति । स्वेच्छयैवेति । एकोऽहं बहु स्यामिति श्रुतिसिद्धयेच्छया ।

बुद्धिसाक्षिणे। मुनयो ह वै ब्रह्माणमूचुः। कः परमो देवः।

भाष्यम्

त्कर्मणि क्लेशो भवति, स्वतन्त्रत्वात्। वेदान्तवेद्याय वेदान्तेन वेत्तुं ज्ञातुं योग्यायौपनिषदपुरुषायेत्यर्थः। बुद्धिसाक्षिण इति। "स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः, तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः" इति द्वितीयप्रथमनिरूपितः। गुरवे सर्वान्धकारनिरोधकर्त्रे। नमः नमस्करोमि। पदार्थजातस्य तदीयत्वान्ममापि च

पीयूषलहरी

सर्वकारिण इति। भूतभविष्याद्यखिलविविधविश्वविधानसमर्थायेत्यर्थः। तत्र क्लेशाभावं निरूपयति—नहि तस्येति। तत्र हेतुमाह—स्वतन्त्रत्वादिति। "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः, "स ईश्वरः किं परतो व्यपाश्रयः" इति भागवतवाक्याच्च। मायादिसम्बन्धरहितत्वेन सर्वकर्तृत्वात्स्वतन्त्रत्वम्। अस्याग्रे यथा तथा निरूप्यत्वेन नेह तन्यते। वेदान्तेनेति। ज्ञानात्मकेनोत्तरकाण्डेन। औपनिषदपुरुषायेति। "तन्त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुत्योपनिषत्प्रतिपाद्यपुरुषाय कृष्णायेत्यर्थः। स इति। अत्र विस्तरः सुबोधिन्याम्, प्रकाशे च। सर्वान्धकारनिरोधकर्त्रेति। "त्वं हि नः पिता योऽविद्यायाः पारं तारयसि" "गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वाद्गुरुरित्युच्यते बुधैः। अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः" इत्यादि श्रुतिस्मृतिवचनैस्तथास्वरूपाय। अत्र विस्तरः सर्वोत्तमस्तोत्रबृहट्टीकायां द्रष्टव्यः। नमस्करोमीति। नमनं प्रह्वीभावः, स च नमस्योत्कर्षस्वापकर्षमतिपूर्वककायादिव्यापारविशेषः।

कुतो मृत्युर्बिभेति। कस्य विज्ञानेनाखिलं विज्ञातं भवति।

भाष्यम्

तदधीनत्वान्नाधिकं कर्त्तुं शक्यत इत्यर्थः। एवं ब्रह्मत्वेन गुरुत्वेन च श्रीकृष्णं नत्वा कस्मात्कृष्ण इत्यनुयोगोत्तरं प्रदाय स्थितं मुनयोऽनुयुञ्जन्ति। तदाह मुनय इति। भगवन्मनन-शीला भक्ताः। ब्रह्माणं जलजासनमूचुरकथयन्। तस्य विखन-स्त्वात्। प्रश्नमाह कः परमो देव इति। वृन्दारकवृन्द-मध्ये श्रेष्ठः सर्गादिदशविधलीलाविशिष्टः क इति प्रश्नाशयः। दशविधलीलाविशिष्टस्यैव मुख्यतया देवपदवाच्यत्वात्। कुत इति कस्मात्सकाशात्प्राणिभक्षको मृत्युर्भयं प्राप्नोतीति द्वितीयः प्रश्नः। कस्येति कस्य विशेषतो याथातथ्यज्ञानेन सकलं ज्ञातं भवतीत्यखिलजगत्कारणं क इति तृतीयप्रश्ना-

पीयूषलहरी

तत्प्रयोजनमाह—पदार्थजातस्य तदीयत्वादिति। "सहैतावानास" "स वै सर्वमिदं जगत्" "सर्वं खल्विदं ब्रह्म" "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते स्वाम्यं तु तत्र कुधियः पर ईश कुर्युः" इत्यादिश्रुति-स्मृतिवाक्यात्। एवं सकलप्रपञ्चस्य तदीयत्वमाख्याय ब्रह्मणोऽपि तदीयत्वं तदधीनत्वं चाह—ममापि चेति। "मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजयत्स्वयम्। ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमम्। मत्पुत्रत्वं च कामादौ लोकाध्यक्षत्वमेवच" इति भारतवाक्यात्। तत्स्र-ष्टृत्वेन तदधीनत्वम्। नाधिकमिति। "किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय। लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति' इति वाक्यात्। तस्य विखनस्त्वादिति। विशे-षेण ब्रह्मरूपवेदार्थान् यावदायुषं खनतीति विखना ब्रह्मेति व्युत्पत्त्या

केनेदं संसरति । तदुवाच ब्राह्मणः । श्रीकृष्णो वै परमं

भाष्यम्

शयः । केनेति परिदृश्यमानमखिलं केन संसृतिमद्भवतीति चतुर्थः प्रश्नः । एवमनुयोगचतुष्टयं श्रुत्वोत्तरं वितरति-तदुहोवाच ब्राह्मण इति । श्रीकृष्ण इति । सदानन्दः कृष्ण एव सर्वदेवानां मध्ये श्रेष्ठं दैवतं देवः । शिवब्रह्मादीनामपि

पीयूषलहरी

वेदार्थविचारकत्वादित्यर्थः । सर्वदेवानामित्यारभ्य देवइत्यन्तं भाष्यं स्फुटम् । तस्य श्रैष्ठये हेतुमाह—शिवब्रह्मादीनामपि तत्तत्पदप्रदत्वादिति । शिवाय शिवपदप्रदो ब्रह्मणे ब्रह्मपदप्रदः । ब्रह्मपदप्रदत्वं तु भारतवचसा प्राङ्निरूपितमेव शिवेऽपि "यच्छौचनिसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" इति भागवतवाक्ये शिरसा भगवच्चरणामृतधारणजन्यशिवत्वस्य व्यक्तत्वात् । तत्रैव च तस्याः "यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः । सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिसृता सरित्"इति चतुर्थस्कन्धवाक्यात् कृष्णचरणलब्धजनित्वस्य "या वैलसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री"त्यत्र तच्चरणधृततुलसीविमिश्रेरेणोर्वाह्यमानत्वस्य तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्देवस्य क्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिधीयमानातिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्ध्न्यवततार"इत्यादिपञ्चमस्कन्धवाक्यात्तच्चरणप्रक्षालननिर्गतकुङ्कुमयुक्तत्वेन कल्मषगोत्रकुलिशत्वस्य च सुनिरूपितत्वेन तद्धारणादेव शिवपदप्राप्तिः । तदवतरणक्रमस्यापि "ते देशास्ते जनपदास्ते श्रमास्ते च पर्वताः । येषां भागीरथी गङ्गा

## दैवतम् । गोविन्दान्मृत्युर्बिभेति,

भाष्यम्

तत्तत्पदप्रदत्वात् । द्वितीयमुत्तरयति–गोविन्दादिति । पूर्वोक्तादेव देवान्मृत्युर्भयं प्राप्नोति । मृत्योरत्यन्तविस्मारकत्वादानन्दस्य च भगवद्धर्मत्वात् "कृषिर्भूवाचकः शब्दः" इति

पीयूषलहरी

मध्ये नैति सरिद्वरा" इत्यारभ्य यागब्रह्मचर्यतपःप्रभृतिभ्यस्तत्सेवनश्रैष्ठ्यमुक्त्वा, गाङ्गसलिलकृतसन्ध्यादिकर्मणां दिविस्थत्वम्, कृताघस्यापि तत्सेवनयोत्तमगतिमत्त्वम्, गाङ्गयामुनसङ्गमत्यक्तदेहस्य मुक्तिं च निरूप्य, क्रतुशतैरप्यधिकफलदत्त्वं, तत्पानीयप्राप्ततर्पणानामपि परां तृप्तिं प्रकट्य, देहान्ते चोपासकस्य राजादिभ्यो भयाभावमाज्ञाप्य "गगनाद्गां पतन्तीं वै महापुण्यां महेश्वरः, दधार शिरसा गङ्गां तामेव दिवि सेवते" इति सप्तसप्ततितमश्लोकाच्छिवशिरोऽलङ्कारत्वमुपपाद्य "नारायणादक्षयात्पूर्वजाता विष्णोः पादाच्छिशुमाराद्ध्रुवाच्च । सोमात्सूर्यान्मेरुरूपाच्च विष्णोः समागता शिवमूर्ध्नो हिमाद्रिम्" इति भारतीयानुशासनिकपर्वान्तीयपञ्चषष्ठितमाध्यायवचोभिः स्फुटमुक्तत्वात् ।

प्रकृतमनुसरामः । पूर्वोक्तादिति । गवामिन्द्रादित्यर्थः । गवामिन्द्रत्वं तु "तदस्माकं गुरुस्त्वं हि प्राणदश्च महाबलः । अद्यप्रभृति नो राजा त्वमिन्द्रो वै भव प्रभो । तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः । एभिरद्याभिसिञ्चस्व मया हस्तावनामितैः । अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्" इति हरिवंशद्वितीयपर्वान्तर्गतोनविंशाध्याये । "त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते" इति भागवते च सुनिरूपितमेव । मृत्युस्वरूपनिरूपणपूर्वकं सोपपत्तिकं तस्य भगवत्सकाशाद्भयं निरूपयति–मृत्योरित्यारभ्यश्रुतेरित्यन्तम् ।

भाष्यम्

श्रुत्या कृष्णस्य सदानन्दरूपवत्त्वेन ततस्तस्य भयं युक्तमेव "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्थायनाय विद्यते" इति श्रुतेः "मर्त्यो मृत्युव्यालभीतः पलायँल्लोकान्सर्वान्निर्भयं नाध्यगच्छत्"इति दशमतार्त्तीयिकात्। एवमेवाजामिलप्रासङ्गिकयमवाक्यानि सङ्गच्छन्ते।

पीयूषलहरी

यमवाक्यानीति। भगवतः सकाशाद्यमस्य भयसूचकानि, तान्येवं "परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम्। यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः। यो नामभिर्वाचि जनान्निजायां बध्नाति तन्त्यामिव दामभिर्गाः। यस्मै बलिं त इमे नामकर्मनिबन्धबद्धाश्चकिता वहन्ति। अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः। आदित्यविश्वेवसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः। अन्ये च ये विश्वसृजोऽमरेषा भृग्वादयो स्पृष्टरजस्तमस्काः। यस्ये हि तं न विदुः स्पृष्टमायाः सत्वप्रधाना अपि किं ततोऽन्ये। यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वासुभृतो विचक्षते। आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम्। तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः। प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः। भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि। रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्चमर्त्यानथ सर्वतश्च। धर्मं तु साक्षाद्भगवत्प्रणीतन्न वै विदुर्ऋषयो नाऽपि देवाः। न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः। स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः। प्रह्लादो जनको भीष्मो बलिर्वैयासिकिर्वयम्। द्वादशैते विजानीमो धर्मं भागवतं भटाः। गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते। एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः। भक्तियोगो भगवति तन्नामग्रहणादिभिः। नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः।

# गोपीजनवल्लभविज्ञानेनैतदखिलं ज्ञातं भवति।

भाष्यम्

तृतीयस्योत्तरमाह-गोपीजनवल्लभविज्ञानेनेति। गोपीजनो हि घोषसीमन्तिनीसमूहस्तस्य वल्लभः प्रियः"तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः, तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः"इति दशमवाक्यात्। तस्य ज्ञानेनैवाखिलं ज्ञातं भवति। तस्य सकलकारणत्वात्। कारणज्ञानेनैव हि कार्यज्ञानम्। यथा मृज्ज्ञानेन घटशरावादीनाम्। "यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विदितं भवति"इति दृष्टान्तश्रुतेः। एतेन जगतः सत्यत्वं ब्रह्मणश्चाभिन्ननिमित्तोपादानकारणत्वं च निरूपितम्।

पीयूषलहरी

अजामिलोऽपि येनैव मृत्युपाशादमुच्यत। एतावतालमघनिर्हरणाय पुंसां सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम्। विक्रुश्य पुत्र मघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम्। प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययालम्। त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः। एवं विमृष्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम्। ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः। ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः। तान्नोपसीदत हरेर्गदयाभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे" इत्यादीनि षष्ठस्कन्धीयतृतीयाध्यायवाक्यानि सङ्गच्छन्त इति युज्यन्त इत्यर्थः।

गोपीजनवल्लभविज्ञानेनाखिलज्ञानं निरूपयति-गोपीजनोहीत्यारभ्य कार्यज्ञानमित्यन्तम्। तत्र दृष्टान्तमाह-यथा मृदिति। सत्यत्वमिति। "सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाना"इतिश्रुत्या ब्रह्मण्येवोत्पत्त्यादीनां प्रतिपादितत्वात्।

पीयूषलहरी

ननु न ब्रह्मणो जगत्कर्तृत्वं सम्भवदुक्तिकम्, अविद्याकृतत्वात्, विकारित्वापत्तेः, सिद्धान्तभङ्गप्रसङ्गाच्च । तथाहि—घटादौ मृदिव सर्वरूपभवने ब्रह्मणो विकारित्वापत्तिः, घटशरावादीनां मृद्विकारित्ववद्, जगद्ब्रह्मेति पदार्थद्वयसिद्धौ शुद्धाद्वैतभङ्गप्रसङ्गोऽपि; नानात्वदर्शनस्य च "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति निन्दाश्रुतिविरोधश्च । एवं सत्कार्यवादस्यानेकदोषदुष्टत्वेन भ्रान्तिप्रतिपत्त्युपगायस्यैव ज्यायस्त्वात्तथैव मन्तव्यम् । न च प्रतीतिविरोधः शङ्क्यः, तस्यास्तु शुक्तिशङ्खादौ रजतत्वपीतिमत्त्वप्रतीतिरिव भ्राम्यविद्ययोपपन्नत्वादिति चेन्न, सत्याधीनत्वात्, अविकारित्वात्, ब्रह्मरूपत्वाच्च । भ्रान्तिस्तावत् द्रष्टा, दृश्यं, विषयश्चेति तत्त्वत्रयप्रतिपत्त्यधीनप्रतिपत्तिका । यथा द्रष्टा सर्पो गुणश्चेति तत्त्वत्रयसत्त्वे द्रष्टुर्गुणे लम्बत्वादितत्सदृशधर्मवैशिष्ट्यदर्शनात्तदुद्भवः, तथैव जगत्तत्सदृशधर्मा च कश्चिद्द्रष्टा चेति जगतो मिथ्यात्वाङ्गीकारे त्रिकाभावेन तदुत्पत्तेरसम्भवदुक्तिकत्वात्तत्प्रतिपत्त्यर्थमपि सत्यं जगदपेक्ष्यमेवेति । किञ्च "कथमसतः सज्जायेत" इति श्रुतिविरोधश्च । शङ्खादौ पीतप्रतीतिस्तु सकामलानाम्, नहि तैर्दृष्टाः पदार्थाः पीता भवन्ति, औषधादिना तन्नाशे यथार्थावबोधात् । तथैवाविद्यावद्भिर्नश्वरत्वमिथ्यात्वादिविशिष्टं दृष्टं जगत्तथा न भवति । तेषामपि ज्ञानेन तन्नाशे "सर्वं खल्विदं ब्रह्म" इतिश्रुतिप्रतिपादितस्य जगतो ब्रह्मरूपत्वावगमात् घटादौ मृदिव । सर्वरूपभवनेऽप्यविकारित्वं तु "पूर्णमदः पूर्णमिदं पुर्णात्पूर्णमदच्युते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतिप्रसिद्धमेव । श्रुत्यर्थस्तु—अदः परोक्षं ब्रह्म पूर्णं आकाशवद्व्यापि निरंतरं निरुपाधिकं पूर्णमिदं नामरूपाभ्यां व्यवह्रियमाणमवतारादिरूपमपि पूर्णम् । एवं व्यवहाराव्यवहार्यस्वरूपयोर्निरुपाधिकत्वं निरूप्य कार्यरूपेऽपि तथात्वमाह—पूर्णात्पूर्णमुदच्यते पूर्णात् कारणात्मनः सकाशात् पूर्णमुत् पूर्णानन्दं सदच्यते । स पूर्णं सदुद-

## स्वाहेत्यनेनेदं संसरति।

भाष्यम्

चतुर्थमुत्तरयति स्वाहेति। स्वाहया त्रिजगत्सम्यक्सरतीत्यर्थः।

पीयूषलहरी

च्यत इति वा। अञ्चुगतिपूजनयोः अच इत्येक इति पाणिनिः। पूज्यते उद्गच्छति वा। एवं स्थितिदशायां कार्यस्य ब्रह्मरूपत्वमुक्त्वा प्रलयदशायामाह पूर्णस्य ब्रह्मणः पूर्णं निरुपाधिकमेकरसत्वलक्षणमादाय पूर्णं ब्रह्मैवावशिष्यत इत्यणुभाष्यप्रकाशे "श्रुतत्वाच्च" इति सूत्रे पण्डितपुरन्दराः श्रीमत्पुरुषोत्तमचरणाः। इदं सर्वं जन्मादिसमन्वयेत्याद्यधिकरणेषु विशदम्। अत्रेदमवधेयम्—सदाद्यंशैस्त्रिधासृष्टिप्रकारेण ब्रह्मण एवाभिव्यक्तिः, वेदे "हि यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म विजिज्ञासस्व"। "यथाग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति, तथा ब्रह्मणः सकाशात् सर्वे लोकाः सर्वे जीवाः कपूयचरणा रमणीयचरणाः" "तत्सृष्ट्वा तदेवानुप्राविशत्"-इत्यादि श्रुतिभिर्जगतो ब्रह्मरूपत्वेन सिद्धत्वान्मायादिसम्बन्धरहितस्यैकस्यैव सर्वरूपभवने पदार्थद्वयासम्भवेन सिद्धान्तभङ्गस्तु दूरापास्त एव। किञ्च सर्वे वेदा यत्पदमामनन्तीति श्रुत्या ब्रह्मस्तोतुकामो हि वेदः "एतावानस्य महिमा अतो ज्यायांस्तु पूरुषः" इति श्रुत्युक्तं तस्य माहात्म्यज्ञानं प्रतिपादयति, तच्च श्रुतावेतावत्पदेन जगतो माहात्म्यरूपत्वकथनात्तस्य मिथ्यात्वे मिथ्यामाहात्म्यप्रतिपादकत्वेनानर्थ एव पर्यवस्येत। वेदे च "निश्वसितमस्यवेदाः" इति श्रुत्या तस्य तन्निश्वासरूपत्वेन जगदन्तःपातितया च मिथ्यात्वेन ब्रह्माप्यलीकं भविष्यतीति दिक्। विशेषस्तु मत्कृतशुद्धाद्वैतमञ्जरीतोवगन्तव्यः।

एवं ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वनिरूपणेन मायाविद्याप्रकृतिपरमाणुवादिनां तत्त्वं निरस्य संसारं निरूपयति—स्वाहयेति। स्वाहाख्यया तच्छक्त्येत्यर्थः।

तदुहोचुः । कः कृष्णः, गोविन्दः कोसाविति । गोपीजनवल्लभः कः । कास्वाहा । तानुवाच ब्राह्मणः । पापकर्षणः ।

भाष्यम्

पुनरनुयोगानाह तदिति । ते मुनयः पुनरप्यपृच्छन्क इति । पूर्वं "कृष्णो वै परमं दैवतम्"इतिश्रुत्या प्रतिपादितः कृष्णः कः । "गोविन्दान्मृत्युर्बिभेति"इति श्रुत्या निरूपितो मृत्योर्बिभीषको गोविन्दश्चेति । सकलज्ञानकारणरूपो "गोपीजनवल्लभविज्ञानेनैतदखिलं ज्ञातं भवति"इति श्रुतिप्रतिपादितो गोपीजनवल्लभः कः । "स्वाहेत्यनेनेदं संसरति"इतिश्रुतिनिरूपिता च केति । तानुत्तरयन् ब्रह्मा जगाद-पापेति । सर्वेषां भक्तानां पापं कर्षयत्यतः कृष्णः ।

ननु तैस्तैरन्यैरपि भक्तानां पापनाशसंभवात्कथमस्यैवैकान्ततः पापापकर्षकत्वमिति चेन्न,नान्यैर्देवैर्निःशेषपापापगमः

पीयूषलहरी

पुनरित्यारभ्य केत्यन्तं प्रश्नचतुष्टयमुक्त्वा प्रथमस्योत्तरमाह-सर्वेषामिति ।

शङ्कामाह-नन्विति । समाधानमाह-नान्यैर्देवैरिति । "सत्वं रजस्तम इति प्रकृतेर्गुणाः" इति वाक्यात्तेषां सात्विकादिभेदेन त्रैविध्याज्जीवानां नैर्गुण्यसम्पादकत्वाभावात् । भागवते "हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः" इति वाक्येन तस्यैव निर्गुणत्वोक्त्या तद्भजनस्यैव "केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः । न तथा ह्यघवान् राजन् पूयेत तपआदिभिः । यथा कृष्णार्पितः प्राणस्तत्पुरुष-

## गोभूमिवेदविदितो वेदिता ।

भाष्यम्

कर्त्तुं शक्यो, यथानेन क्रियते, "धुनोति सर्वं हृदि सन्निविष्टः" इति वाक्यात् । "मां हि पार्थ व्यपाश्रित्य" इति गीतावाक्याच्च ।

गोविन्दं लक्षयति । गोभूमिवेदविदितोवेदितेति । गोभिः

पीयूषलहरी

निषेवया" इत्युक्त्या नैर्गुण्यापादकत्वेन निःशेषपापनाशकत्वात् । तत्र प्रमाणमाह–धुनोतीति । "स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्मयच्चोत्पतितं कथं चिद्धुनोति सर्वं हृदि सन्निविष्टः" इत्येकादशस्कन्धीयपञ्चमाध्यायवाक्यम् । अर्थस्तु–अन्यस्मिस्त्यक्तो भावो रतिर्येनेति त्यक्तान्यभावः । "रतिर्देवादिविषया भाव इत्यभिधीयते" इति वाक्यात्तत्रानन्यवृत्तियुक्तस्य । "स्वपादमूलं भजतः" इति स्वचरणपरिचर्यामाचरतः । प्रियस्येति । सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः । ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते । श्रद्दधाना मत्परमा भक्तास्तेतीव मे प्रियाः" "न तथा मे प्रियतम आत्मयोनिर्न शङ्करः । न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्" इति गीताभावतादिवाक्योक्तप्रियस्य, परेश इति । परमकाष्ठापन्नसर्वनियमनशीलः । हरिरिति । सर्वदुःखहारकः । हृदि सन्निविष्ट इति । दहरविद्ययोक्तप्रकारेण भक्तहृत्कञ्जस्थितः । प्रमादाद्यत्किञ्चिद्विकर्मोत्पतितं तद्धुनोतीति सर्वपापापहारकत्वेन भक्तिप्रतिबन्धकं सर्वं स्वयं नाशयतीत्यर्थः । द्वितीयं प्रमाणमाह–गीतावाक्यादिति । गीतायां नवमाध्यायवाक्यात् ।

गोविन्दपदार्थमाह—गोभिरिति । नच वेदे पुरुषसूक्तादिसिद्धं ब्रह्मैव प्रतिपाद्यते न तु हरिः कृष्णो गोविन्दो वेति शङ्कयम् । पुरुषसूक्तार्थनिरूपिकायां मुद्गलोपनिषदि हरेरेव निरूपणात् ।

पीयूषलहरी

तथाहि—"सहस्रशीर्षा इत्यत्र सशब्दोऽनन्तवाचकः। अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा। तत्र प्रथमया विष्णोर्देशतो व्याप्तिरीरिता। द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते। विष्णोर्मोक्षप्रदत्वं च कथितं च तृतीयया। एतावानिति मन्त्रेण वैभवं कथितं हरेः। एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः। त्रिपादित्यादिना प्रोक्तमनिरुद्धस्य वैभवम्। तस्माद्विराडित्यनया पादनारायणाद्धरेः। प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता। यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः। अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः। तस्मादिति च मन्त्रेण जगत्सृष्टिः समीरिता। वेदाहमितिमन्त्राभ्यां वैभवं कथितं हरेः। यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः। य एवमेतज्जानाति स हि मुक्तो भवेदिति" इत्यादि श्रुतिभिस्तस्यैव ब्रह्मत्वेन निरूपणात्। अतो यत्र कुत्रापि ब्रह्मत्वेन निरूपणं तत्तद्रूपविशिष्टस्य तस्यैवेति सिद्धान्तः। ननु किमनेन महता सन्दर्भेण पुरुषसूक्तस्यैव विराड्वर्णनपरत्वेन तदर्थानापादकत्वात्तस्यापि तदर्थनिरूपकत्वेन सुतरां तथात्वादिति चेन्न, तस्य विराड्-जनकपुरुषनिरूपकत्वात्। तत्र तावत् "सहस्रशीर्षा" इत्यादिमन्त्रौ तस्य स्वरूपं व्यापकत्वं चोक्त्वा, "पुरुष एवेदं सर्वम्"इति मन्त्रेण जगतस्तद्रूपत्वं, "एतावान्"इति मन्त्रेण सर्वस्य तन्महिमत्वं च निरूप्य, "अतोज्यायाँश्च पुरुषः" इति श्रुत्या तस्य सर्वतो ज्यायस्त्वं, पादत्रयोर्ध्वं च तस्य स्थितिं प्रकटय्य पादव्यक्त्यर्थं ततो विश्वोत्पत्तिं तत्कर्तृत्वं च निगमय्य, "ततो विराडजायत" इति श्रुत्या विराडुत्पत्तिकथनान्नायं विराडिति सिद्धान्तः। एवं मुद्गलोपनिषदि "सहस्रशीर्षा" इति मन्त्रेण विष्णोर्देशतो व्याप्तिं द्वितीयया कालतस्तृतीया तस्यैव मोक्षप्रदत्वं निर्दिश्य, "एतावान्" इति मन्त्रेण हरेर्माहात्म्यं निरूप्यते। अग्रे च प्रद्युम्नादि चतुर्व्यूहविशिष्टं पुरुषोत्तमं प्रतिपाद्य पादाभिव्यक्तिपूर्वकं तत एव प्रकृतिपुरुषयोरुत्पत्तिं च प्रदर्श्य, "यत्पुरुषेण" इति मन्त्रेण सृष्टियज्ञं

गोपीजनाविद्याकलाप्रेरकाः । तन्माया चेति,

भाष्यम्

स्वेन्द्रत्वेन विदितो ज्ञातः। भूमिविदितो लोकप्रसिद्धः।वेदविदितो वेदप्रसिद्धः । वेदिता तेषां ज्ञातेत्यर्थः । गोपीजनवल्लभार्थमाह गोपीजनाविद्याकलेति । गोपीजनाएवासमन्ताद्विद्या तत्कलायाः प्रेरको गोपीजनवल्लभः । कृष्णोपनिषदि "गोप्यो गावो ऋचस्तस्य" इतिश्रुत्या तेषां श्रुतिरूपत्वस्य स्फुटत्वात् । तत्र-विद्याया असम्भवाच्च । एवं ब्रह्मस्वरूपं प्रतिपाद्य, स्वाहाया स्तच्छक्तिरूपत्वेन तद्रूपत्वमाह तन्मायाचेति । माया हि भगवतः शक्तिः सर्वभवनसामर्थ्यरूपा—"तस्मान्मायामेतां

पीयूषलहरी

सप्तपरिधींश्चोत्क्वा, "तं यज्ञम्" इति मन्त्रेण यथाविधं सृष्टियज्ञं "वेदाहम्" इति मन्त्रेण च हरेर्माहात्म्यं सुनिरूप्य "यज्ञेन" इति मन्त्रेण तमुपसंजहार "तमेव विदित्वा" इति मन्त्रेण मोक्षं चाचकथदिति न कश्चिद्विरोधः ।

प्रकृतमनुसरामः । तेषां श्रुतिरूपत्वस्येति । "नस्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् । षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा । तथापि न मया प्राप्तास्तासां वै पादरेणवः" इति नारदं प्रति ब्रह्मवाक्यात् । अत्र नारायणस्तावद्गोपीजनस्य या अविद्या कला अविद्यावयवास्तासां प्रेरको निवर्तको गोपीजनवल्लभ इत्याह तन्न रुचिरम् , तेषां श्रुतिरूपत्वस्य प्रतिपादितत्वात् । प्रेरकपदस्य निवर्तकार्थत्वाभावाच्च । मायाहीति । भगवन्त इति । षडैश्वर्यवतः । शक्तिरिति "श्रिया पुष्ट्या गिरा कान्त्या तुष्ट्या शीलेऽयोर्जया । विद्ययाविद्यया शक्त्या मायया च निषेवितम्" इति भागवते मुख्यद्वादशशक्तिषु गणनात् । तत्र श्रुतिं प्रमाणयति तस्मादिति । पूर्वोक्तकारणादेतां भगवदीयां मायां सर्वभवनसामर्थ्य-

सकलं परंब्रह्म । एतद्यो ध्यायति रसति भजति सोऽमृतो भवति ।

भाष्यम्

शक्तिविद्याद्य एतां मायां शक्तिं वेद स पाप्मानं तरति स मृत्युं तरति स संसारं तरति सोऽमृतत्वं च गच्छति महतीश्रियमश्नुते" "मम योनिरप्स्वन्तः समुद्रे"; "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यादिनृसिंहपूर्वतापिनीदेवीसूक्तगीताशास्त्रप्रामाण्यात् । एवं मायायाः शक्तिरूपत्वमुक्त्वा, तस्याः "शक्तिशक्तिमतोरभेदः" इतिन्यायेन पूर्वोक्तस्य सकलस्य तद्रूपत्वमाह सकलमिति । कृष्णो गोविन्दो गोपीजनवल्लभश्चेति नामत्रयनिर्देशपूर्वं माया च सर्वं परब्रह्मरूपमेवेत्यर्थः । तस्य ध्यानादिकमाह एतद्य इति । यो भक्तो वेदप्रसिद्धं कृष्णाख्यं परं ब्रह्म ध्यायति तत्स्वरूपं लीलां वा स्वध्येयत्वेन ध्यानविषयं करोति । रसति कीर्त्तयति जपति वेत्यर्थः । भजति शरीरादिना सेवते । स भक्तः । अमृतो भवति

पीयूषलहरी

रूपां यो विद्वान् पाप्मानं पापस्वरूपं मृत्युमत्यन्तस्वरूपविस्मारकं च तरति पारङ्गच्छति । नहि तौ भजने प्रतिबन्धकौ भवत इत्यर्थः । सोऽमृतत्वमिति । तस्याः स्वरूपं ज्ञात्वा प्रतिबन्धं च दूरीकृत्य भजन् भगवत्सायुज्यं प्राप्नोति । महतीं सेवोपयिकीं श्रियं लक्ष्मीं च प्राप्नोतीत्यर्थः । द्वितीयां श्रुतिमाह ममयोनिरिति । "अहमेव स्वयं वदामि जुष्टं देवेभिरुतमानुषेभिः । यं कामये तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं पितरमस्य सुमेधामहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे" इति ऋग्वेदे देवीसूक्तस्था । अत्र देव्यैव स्वकारणत्वेन जलशायिविष्णोरेव व्यक्तमु-

भाष्यम्

मुक्तो भवतीत्यर्थः । एतद्यो धारयति रसति भजति ध्यायते प्रेमति शृणोत्याश्रावयत्युपदिशत्याचरते सोऽमृतो भवतीति शाखान्तरीयपाठे तु भगवतः सर्वाङ्गे मनोधारणं धारयति पदार्थः । रसति भजति ध्यायत इत्यादीनां पूर्ववदेव ।

प्रेमति । युधिष्ठिरादिवत्स्निह्यति । शृणोति भगवद्गुण-गानं, कथां वा । श्रावयति परान् । उपदिशति मन्त्रद्वारा बोधयतीत्यर्थः । आचरति स्वयं भगवद्धर्मान् । सोऽमृतो भवतीति पूर्ववत् । अत्र यद्यपि त्रयमेवोच्यते, तथाप्युपल-क्षणविधयान्यत्रोक्ता अप्यन्याः समायान्ति ।

पीयूषलहरी

क्त्वात्तस्यास्तच्छक्तित्वमक्षुण्णमेव । एवमित्यारभ्य मुक्तोभवतीत्यन्तं व्यक्तम् । शाखान्तरीयपाठं लक्षयति—एतद्य इति । अन्याः समाया-न्तीति । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इति भागवतोक्तैतत्त्रयातिरिक्ता भक्तयः प्राप्यन्त इत्यर्थः । तत्र श्रवणं नाम भगवद्वाचकपदानां भगवति शक्तिता-त्पयनिर्धारः, वेदान्तानां ब्रह्मणि तात्पर्यावधारणानुकूला मानसीक्रि-या श्रवणमिति कश्चित्, तन्न, गौरवात्, वेदान्तपदव्युदस्तपुराणेतिहा-सादिश्रवणेऽव्याप्तेश्च, कीर्तनं नाम पदवाक्यानां भगवति शक्तितात्प-र्यनिर्धारपूर्वकमुच्चारणम्, तथैव स्वस्वरूपचिन्तनम् स्मरणम्, पादसेवनं परिचर्या, अर्चनं पूजा, वन्दनं नमस्योत्कर्षस्वापकर्षमतिपूर्वकः कायादि-व्यापारः, दास्यं सर्वकर्मार्पणम्, सख्यं तद्विश्वासादिः, आत्मनिवेद-नम्-आत्मदेहप्राणेन्द्रियान्तःकरणानां भगवति समर्पणमिति सिद्धान्तः । यथाऽत्रोपलक्षणविधया नवविधाया ग्रहणं तथैव "तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्"इति

भाष्यम्

नच नवविधभक्तिसमूहस्यैव मुक्तिफलकत्वमिति शङ्क्यम्, एकस्या अपि फलप्रदत्वात् ।

पीयूषलहरी

भागवतवाक्येऽपि तथैव ग्रहणम् । न च धर्मान्तरमेतत्, भागवतशास्त्रस्य भक्तिफलकत्वादुक्तः श्रीशुकस्य ब्रह्मज्ञत्वाच्च भक्तिरूपमेव । एवं त्रिभिः स्नेहे जाते त्रयातिरिक्तानां प्रेमान्तरभावित्वात्तत्कर्तव्यतात्वनुक्तसिद्धैव । एतेन "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतावप्यनुक्तसिद्धान्तमुपलक्षणविधया ग्रहणमित्यपि सूचितम् । परमेतावान् विशेषः—मनननिदिध्यासनयोर्द्वितीयसुबोधिन्यां श्रवणशेषत्वनिरूपणाच्छ्रुतावेकविधानम् । भागवते तु त्रयमिति । श्रुतौ द्रष्टव्य इत्यनेन ज्ञानमुक्तम् तदपि प्रेम्णा कृतैस्त्रिभिर्भागवतोक्तैः श्रवणादिभिः सम्भवति । केचित्तु निदिध्यासनं मुख्यं कारणं तदङ्गं मननम्, मननाङ्गं श्रवणमित्याहुः, अपरे तु श्रवणं प्रधानं मनननिदिध्यासनयोः श्रवणात्पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्तकतयाऽऽरादुपकाराङ्गत्वमाहुः; तत्र नाद्यः, भक्त्यैकलभ्यत्वात्पुरुषोत्तमस्य, द्वितीयस्तु नातिविरोधीति न दूष्यते ।

प्रकृतमनुसरामः । शङ्कामाह—नचेत्यारभ्य शङ्क्यमित्यन्तम् । समाधानमाह—एकस्या अपीती । अत्र तावत् "अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्" इति सूत्रे "परंब्रह्मैतद्यो धारयति" इति श्रुतिवाक्यं विषयीकृत्य तत्र समुदितान्तमेव मुक्तिसाधकत्वमुत प्रत्येकस्यापीति संशये अत्र धारणादि साधनकलापमुक्त्वा फलमुच्यत इति समुदितानामेव मुक्तिसाधकत्वम् । किञ्चोपलक्षणविधया श्रवणादिनवविधभक्तीनामप्येवमेव साधकत्वम्, नतु प्रत्येकमिति पूर्वपक्षे सिद्धान्तमाहुः—अनियम इत्यदिः । समुदितानां तेषां फलसाधकत्वमिति न नियमः । कुतः? सर्वासामविरोधः

पीयूषलहरी

इति । सत्पुण्डरीकनयमित्यारम्य "चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः" इति श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते । पञ्चपदीं जपन्नित्याद्युक्त्वा "ब्रह्म सम्पद्यते ब्रह्म सम्पद्यत" इति श्रुत्या कीर्तनस्य तथात्वमुच्यते । एवं च प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः । तथा च "परं ब्रह्म तद्यो धारयति हरत्यादिषु "सोऽमृतो भवति" इत्यस्य प्रत्येकं सम्बन्धो ज्ञेय इति ।

ननु दण्डो घटकारणमित्युक्त्वावपि नैकस्य तज्जनकत्वमपि तु चक्रचीवरादिसहितस्यैव । प्रकृतेऽप्येकस्योक्ता कारणतान्येषामपि सङ्ग्राहिकेति चेन्न, दण्डादिकारणतायाः प्रत्यक्षेणावगम्यमानतया तत्र तथात्वं सम्भवेदपि प्रकृते कारणता शब्दगम्येति श्रुत्युक्तैव सरणिरिति ।

ननूक्तन्यायः श्रुतिष्वपि निर्णायको भविष्यतीति चेन्न, अलौकिकार्थे लौकिकस्यासामर्थ्यात् । अन्यथा ब्रह्मणा मनसैव जनने निषेकादिकमपि कल्प्यताम् । स्मृतिरपि " केवले न हि भावेन गोप्यो गावः खगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धामामीयुरञ्जसा ।" "एतावान् साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया । जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः" इति । स्यादेतत् श्रवणादीनां मुक्तिव्यवहितक्षणे युगपदपि सम्भवेन यत्रैकस्मिन्नेव भक्तेरुक्तसाधनस्तोमसम्पत्तत्रैकेनैव मुक्तावितरसाधनबोधकश्रुतिविरोधः । सर्वेषामेकतरस्यान्येषां वान्यथासिद्धत्वम् । तत्राप्यनियमात्किमन्यथासिद्धमित्यनिर्धारः । तस्मान्न प्रत्येकं कारणत्वं युक्तिसहमिति चेन्न, पूर्वोक्तश्रुतिवाक्यैः प्रत्येकं मुक्तिसाधकताया निरूपणात् । तृणारणिमणिन्यायेन पृथगेव कारणता । तथाच तारणाग्नित्वावच्छिन्नं प्रति तृणत्वेन कारणत्ववच्छ्रवणजन्यमुक्तित्वावच्छिन्नं प्रति श्रवणत्वेन कारणत्वमिति सिद्धम् । तेन किं कारणतावच्छेदकमित्यपि कुचोद्यं निरस्तम् । नवविधायां च परीक्षिच्छुकप्रह्लादपृथ्वक्रूरहनुमल्लक्ष्म्यर्जुनोद्धवानामेकैकयैव फलप्राप्तेरुक्तत्वात् ।

तेहोचुः । किं तद्रूपम् । किं रसनम् । कथं वाहो-तद्भजनं सर्वं विविदिषतामाख्याहि । तदुहोवाच हैरण्यः । गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम् ।

भाष्यम्

तथाचाग्रे वक्ष्यति "चिन्तयश्चेतसा कृष्णमि"ति । पुनरपि प्रश्नत्रयं निरूपयति ते होचुरिति । किं तद्रूपमिति पूर्वप्रति-पादितस्य ब्रह्मणो रूपं स्वरूपं किम्प्रकारकमित्येकः प्रश्नः । द्वितीयमाह—किं रसनमिति । पूर्वोक्तं तद्रसनमपि किम्प्र-कारकमित्यर्थः । तृतीयमाह—कथं वाहो तद्भजनमिति । तस्य भगवतो भजनं कथं केन प्रकारेण भवतीति । त्रयाणां प्रकारज्ञानायाहुः—सर्वमिति । रूपरसनभजनविधिं विविदि-षतां जिज्ञासूनां नः, आख्याहि कथयेत्यर्थः । उत्तरमाह—तदुहोवाच हैरण्य इति । चिन्तनाय तत्स्वरूपमाह—गोपवेष-मिति । लीलाधृतगोपवेशम् । तमेव विशिनष्टि अभ्राभमिति । अभ्रं मेघस्तद्वदाभा यस्येति तं घनश्याममित्यर्थः । तरुणमिति-स्फुटम् । कल्पद्रुमेति । कल्पद्रुमः सुरतरुस्तस्य छायायां विराजितं तत्स्वरूपं चिन्तयन्नित्यग्रिमेण सम्बन्धः ।

पीयूषलहरी

तत्र प्रमाणत्वेनोपनिषद्वाक्यं दर्शयति—चिन्तयन्निति । निबन्धे "वैराग्यं साङ्ख्ययोगौ च प्रेम्णा च तपसा तथा । एकेनापि दृढेनेशं भजन् सिद्धिमवाप्नुयात्"इति श्रीमदाचार्यचरणवाक्यात् । पुनः प्रश्नानाह—किम्प्रकारकमित्यारभ्य कथयेत्यन्तम् । लीलाधृतगोपालवेश-मिति । तत्तल्लीलाभिर्यथाधिकारं तत्तद्भक्तानां मनोनिरोधार्थमित्या-शयः । घनश्याममिति । "अथवा शून्यवद्गाढं व्योमवद्ब्रह्म तादृशम् ।

तदिह श्लोका भवन्ति। सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्। द्विभुजं—

भाष्यम्

एतदेव श्लोकत्रयेण विशदयन्नाह—सत्पुण्डरीकनयनमिति। सुन्दरकमलनयनम्। यथा कमलं तापापहारि तथाऽयमपि स्वदृगन्तपातेन भक्तानां चिरविरहजनितसन्तापशमनसमर्थः। मेघाभमिति मेघवद्गभीरं श्यामं च। वैद्युताम्बरं पीताम्बरधारिणम्। द्विभुजमिति। भुजद्वयशोभितं, गोकुले वृन्दावने च द्विभुजत्वात्। ननु "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजमि"तिवाक्ये चतुर्भुजत्वस्य प्रतिपादितत्वात्कथं द्विभुजत्वमितिचेद्वसुदेवं प्रति स्वपुरुषोत्तमत्वप्रतिपत्त्यर्थमेव तथा। वस्तुतस्तु संयोगपृथक्त्वन्यायेनैकस्यैव स्वरूपद्वयविशिष्टत्वम् "चतुर्भुजश्च वैकुण्ठे गोकुले द्विभुज-

पीयूषलहरी

प्रकाशते लोकदृष्ट्या नान्यथादृक् स्पृशेत्परम्"इति निबन्धात्तत्प्रकाशाच्च। शेषं स्फुटम्। शङ्कामाह—नन्विति। समाधानमाह—वसुदेवस्येति। एकस्यैव द्विरूपत्वं निगमयति वस्तुतस्त्विति। तत्रोपपत्तिमाह—चतुर्भुजश्चेति। युक्तं चैतत्, पूर्वतापिन्यां तस्य द्विभुजत्वं निरूप्य "चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदान्वितम्। सुकेयूरान्वितं बाहुं कण्ठमालासुशोभितम्। द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम्। हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रदम्"इत्यादि श्रुतिभिरुत्तरतापिन्यां चतुर्भुजत्वस्य कथनेन यस्य यत उद्दिधीर्षा तस्य स्वेच्छयैवाङ्गीकारादेकस्यैव स्वरूपद्वयात्मकत्वान्नास्तितयोर्भेदसञ्चारः।

मौनमुद्राढ्यं वनमालिनमीश्वरम् ।

भाष्यम्

स्वयमि"ति वाक्यात् । मौनमुद्राढ्यमिति । गभीरया मुद्रया शोभितम् । वनमालिनमिति । वनमालास्यास्तीति तं वनमालाधारिणमित्यर्थः । ईश्वरमिति । सर्वेषां हृदि वसन्तं

पीयूषलहरी

ननु यद्यत्साकृति तत्तन्नश्वरमित्यनुमानेन शिरःपाण्यादीनामत्र कथनान्नश्वरत्वापत्त्या ब्रह्मत्वहानिः । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "सपर्यगाच्छुक्रमगायमव्रणम्" "अस्थूलमनणु"-इत्यादि श्रुतिभिर्निराकारत्वनिर्गुणत्वनिरूपणेन श्रुतिविरोधादिति चेन्न, निषेधस्य प्राकृताकारपरत्वात् । ब्रह्मणश्च "हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः" इति वाक्यादप्राकृतत्वात् । तथाहि सपर्यगादित्यादि श्रुतावन्यत्र चाकारगुणादीनां निषेधो लभ्यते यत्र, तत्र प्राकृताकारादीनामेव । अन्यथा "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"इति श्रुत्या कलायाः "आसीनो दूरं व्रजति शयानो याति सर्वतः । न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"इति श्रुतिभ्यां क्रियाया "अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" इत्यादि श्रुतौ गुणस्य कथनाच्च तद्विरोधापत्तेः । किञ्च "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते," "आनन्दो ब्रह्मेति व्यजानात्," "रसो वै सः," "रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति," "आनन्दमयोऽभ्यासात्," अरूपवदेव हि तत्प्रधानत्वात्"इति श्रुतिसूत्रादिभिः पुरुषसूक्तादिभिश्च, तस्य सर्वाकारस्यानन्दमयत्वेनाप्राकृतत्वस्य निरूपणात् । पञ्चरात्रेऽपि "आनन्दमात्रकरपादमुखोदरादिः"इति वाक्येन तथानिरुक्तत्वाच्च । अतः अप्राकृताकारवत्वं साकारत्वम् । प्राकृताकाररहितत्वं निराकारत्वमिति निष्कर्षः ।

भाष्यम्

परात्परम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति

पीयूषलहरी

तथैव गुणादावपि ब्रह्मणः "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः-सशृणोत्यकर्णः" । "तदेजति तन्नैजति तद्दूरे तद्वदन्तिके" इत्यादौ पाणिपादादिरहितत्वमुक्त्वा जवनग्रहीतृत्वादिकथनेनैव विरुद्धधर्माश्रयत्वस्य लाभात् । यद्यत्साकृति तत्तन्नश्वरमित्यनुमानमप्यसङ्गतम् । प्राकृताकार एव पर्यवसानात् । नन्वाकारगुणादिविशिष्टस्य मायोपाधिकत्वेन शाखारुन्धतीन्यायात्तस्मिन् साकारत्वं सगुणत्वं चारोप्य पश्चान्निषिध्य शुद्धं निराकारं ब्रह्म वेदो बोधयतीत्यभ्युपगमे परस्परवाक्यानां न कश्चिद्विरोध इति चेन्न, दृष्टान्तवैषम्यात् । तत्र हि शाखारुन्धत्योरुभयोरप्याकृतिवत्त्वेन तथा तज्ज्ञानं भवेदपि, इह तु ज्ञेयस्य निराकारत्वेन विरोधात् । त्रिपाद्विभूतिमहानारायणोपनिषदि "सर्वात्मकस्य ब्रह्मणः साकारनिराकारभेदविरोधो नास्त्येव, विविधविचित्रानन्तशक्तेः परब्रह्मणः स्वरूपज्ञानेन विरोधो न विद्यते तदभावे सत्यनन्तविरोधो विभाति, अथ च रामकृष्णाद्यवतारेष्वद्वैतपरमानन्दलक्षणपरब्रह्मणः परमतत्त्वपरमविभवानुसन्धानं स्वीयत्वेन श्रूयते, सर्वत्र सर्वपरिपूर्णस्य परब्रह्मणः परमार्थतः साकारं विना केवलनिराकारत्वं यद्यभिमतं तर्हि केवलनिराकारस्य गगनस्येव परब्रह्मणोऽपि जडत्वमापद्येत तस्मात्परब्रह्मणः परमार्थतः साकारनिराकारौ स्वभावसिद्धाविति निरूपितं परमार्थत एव ब्रह्मणो विरुद्धधर्माश्रयत्वमुररीकार्यमिति सरलः पन्थाः ।

प्रकृतमनुसरामः । परात्परमिति । "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ।" इति बृहदारण्यकोपनिषच्छ्रुत्या परात्परत्वकथनात् ।

पीयूषलहरी

अर्थस्तु–दिव्यः प्रकाशयुक्तसर्वावभासकश्च, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। अमूर्तः प्राकृताकाररहितः, दिव्याकृतिमत्वात्। पुरुषः पुरि शेतेऽसाविति पुरुषः सर्वव्यापकः पुमान्। सः लोकवेदप्रसिद्धः। बाह्याभ्यन्तरः "व्यस्तभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः" "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति श्रुतिगीतादिवाक्यैः सदंशेन प्रपञ्चे व्यापकत्वाद्बाह्यः। आभ्यन्तरः सर्वगुहाशयः "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योन्तरे यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष आत्मान्तर्याम्यमृतः" इत्याद्यन्तर्यामिब्राह्मणश्रुतेः। अजः, उत्पत्तिविनाशरहितः। ननु गोपालकृष्णादीनां जन्मादिश्रवणात् कथं तद्रहितत्वमिति चेन्न, लीलामात्रत्वात्। भागवते "न ते भवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे।" "आविवेशांशभागेन मन आनकदुन्दुभेः" इति वाक्याभ्यां तस्य विनोदमात्रत्वमुक्त्वा रेतोद्वारा प्रादुर्भावस्य निवारितत्वाच्च। इदमत्र ज्ञेयम्–"अनित्ये जननं नित्ये परिच्छिन्ने समागमः। नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा" इति वाक्यान्नित्यापरिच्छिन्नस्य प्राकट्यमेव नतु जननम्। अतोऽवतारः कथ्यते। अवतरणं प्राकट्यम् तच्च तावन्मात्रमायां दूरीकृत्य स्वयं प्रकटीभावः। अथवा व्यापिवैकुण्ठादत्र भक्तोद्धारार्थमवतरणं वा। अतएव "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति गीतायां तयोरलौकिकत्वेन ज्ञातॄणां स्वप्राप्तिमुक्त्वा, "अवजानन्ति ......मम भूतमहेश्वरम्" इति वाक्येन तत्र मानुषदृशां मूढत्वस्य भगवत एव व्यक्तीकृतत्वात्। अप्राणः दशविधप्राणरहितः। दिव्याकृतौ प्राकृतानां तेषां निवेशासम्भवात्। प्राणानां हि "यः प्राणेषु तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम्, यः प्राणमन्तरोयमयति" इति

## गोपगोपाङ्गनावीतं सुरद्रुमतलाश्रयम् । दिव्यालङ्करणोपेतं

भाष्यम्

गीतावाक्यात् । गोपगोपाङ्गनावीतमिति । गोपैस्तदङ्गनाभिश्च वीतं परिवृतमित्यर्थः, यथा यज्ञोपवीततन्तुभिः । सुरद्रुमतलाश्रयमिति । सुरद्रुमतलं निगमकल्पतरुतलं वाऽऽश्रयो यस्य तम् । तादृग्वृक्षावलम्बिनमिति यावत् । दिव्यालङ्कारणोपेतम् परमकान्तिमदाभरणैः "श्रीवत्सलक्ष्मं" "चूतप्रवाल"इत्याद्युपवर्णितप्रकारकश्रृङ्गारैरुपेतं विभूषितम् अथ श्रृङ्गारविषये बहुनि वक्तव्येऽपि दिग्दृष्ट्या किञ्चिदिहोक्तम् । अथवा दिव्यैरलौकिकैराभरणैः शोभितमित्यर्थः ।

पीयूषलहरी

श्रुत्या नियामकत्वाच्च । अमनाः सङ्कल्पविकल्पात्मकमनोरहितः, तत्र तस्याप्यानन्दमयत्वात् । मनसोऽपि "यो मनसि तिष्ठन् मनसोन्तरो यं मनो न वेद यस्य मनः शरीरम्, यो मनोन्तरो यमयति" इति श्रुत्या नियामकत्वाच्च । शुभ्रः स्वच्छः मलविक्षेपाज्ञानादिदोष रहितः आनन्द मात्रकरपादमुखोदरादित्वात् । अक्षरात्परतः परः, क्षरात्परतोऽक्षरात्परः पुरुषोत्तमः "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति गीतावाक्यात् । अथवाऽक्षरात्परो हि नित्यलीलोपकरणस्तोमस्ततोऽपि परः श्रेष्ठ इत्यर्थः । तस्य परत्वे प्रमाणं दर्शयति गीतावाक्यादिति । गीतायामष्टादशाध्यायवाक्यात् । ननु "ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः" इत्यमरकोषादीश्वरत्वं तु शङ्करसमनियतमेव नान्यगामीति चेन्न, तत्रेश्वरपदेन सर्वैरपि विद्वतिकृद्भिर्विष्णोरेव निरूपणात्, ब्रह्मरुद्रादीनामैश्वर्यस्य साङ्कुशत्वेन निरङ्कुशैश्वर्यस्य श्रीकृष्ण एव प्रसिद्धत्वाच्च । किञ्च "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" । "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः" । इति नारायणोपनिषच्छ्रुत्या भागवतवाक्येन

रत्नपङ्कजमध्यगम्। कालिन्दी जलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयञ्चेतसा कृष्णं मुक्तो भवति संसृतेः। तस्य-पुनारसनमिति जलभूमिन्तु सम्पातः।

भाष्यम्

आभरणानामलौकिकत्वस्योत्तरतापिन्यामेव समर्थितत्वात्। रत्नपङ्कजमध्यगमिति। रत्नमयपङ्कजाकारासनिकारिस्थित-मिति अथवा भक्ता एव रत्नं सारत्वात्, तेषां च हृदय-मेवपङ्कजं तस्य मध्ये गच्छतीति तथा। कालिन्दीति। कलिन्धतीति कलिन्दस्तस्यापत्यं स्त्री कालिन्दी कलिच्छेदन-र्मविशिष्टा या यमुना तस्या यज्जलं तत्रत्या ये कल्लोलास्तरङ्गास्तैः सङ्गो यस्येति तादृशसमीरणसेवितमिति यावत्। चिन्तयन्निति। एतादृशं कृष्णं चेतसा तत्प्रवणचित्तेन भावयन्संसारान्मुच्यत इति। एवं प्रथमप्रश्नोत्तरत्वेन ब्रह्म-स्वरूपमुपपाद्य द्वितीयोत्तरे रसनं निरूपयति—जलभूमिं तु सम्पात इति। यथा सलिलायां पृथिव्यां बीजसम्पातस्तथा

पीयूषलहरी

च तस्यैव प्रतिपादनात्। आभरणानामिति। "धर्मार्थकामकेयूरै-र्दिव्यैर्दिव्यमयेरितैः" इत्यादिगोपालोत्तरतापनीयश्रुतेः। अन्यत् स्फुटम्। तत्प्रवणचित्तेनेति। प्रूङ्गतौ प्रवणं गमनं तस्मिन् ब्रह्मणि प्रवणं तत्प्रवणम्। संसारादिति। अहंता ममतात्मकान्मिथ्याभूतादि-त्यर्थः। नहि संसारेण जगद्ग्राह्यम्। जगतो ब्रह्मरूपत्वात्। अस्या-भिमत्यात्मकत्वाच्च। मुच्यत इति। मनसोत्यन्तं तत्प्रवणत्वेन सर्वत्र तदीयत्वानुसन्धाने तद्रहितो भवतीत्यर्थः। पूर्वं "किं तद्रूपं किं रसनं कथं वाहो तद्भजनम्"इति त्रयानुयोगस्य कृतत्वात्तत्क्रमेण ब्रह्मरूपमुक्त्वा

कामादिकृष्णायेत्यकं पदम्। गोविन्दायेतिद्वितीयम्। गोपीजनेति तृतीयम्। वल्लभायेति चतुर्थम्। इति पञ्चपदञ्जपन्पञ्चाङ्गं द्यावाभूमी सूर्याचन्द्रमसाग्निस्तद्रूपतया ब्रह्म सपद्यत इति।

भाष्यम्

प्रेमार्द्रे मनसि बीजरूपवरणप्रादुर्भावस्तेन च तत्कीर्तनं रसनम्। रसनप्रकारं फलं चाह—कामादीति। क्लीँकार आदिर्यस्येति कृष्णायेत्यन्तमेकं पदम्, गोविन्दायेति द्वितीयम्, गोपीजनेति तृतीयम्, वल्लभायेति चतुर्थम्, स्वाहेति पञ्चममेवं पञ्चपदत्वम्। पञ्चपदजपेन तैस्तैरङ्गैः क्रमेण तत्त्वातिक्रमं दर्शयति—पञ्चपदं जपन्निति। पञ्चाङ्गसंयुतं मन्त्रं जपन्प्रथमेणाकाशं तद्रूपो भूत्वातिक्रामति द्वितीयेन भूमिम् तृतीयेण सूर्यम्, चतुर्थेन विधुम्, स्वाहाख्येन पञ्चमेनाग्निमेवं तत्तत्पदस्मरणात्तत्तद्रूपो भूत्वा तांस्ताश्चातिक्रम्य ब्रह्मसम्पद्यते ब्रह्मप्राप्तो भवतीत्यर्थः। तत्त्वातिक्रमस्य तत्तद्रूपत्वेनैव शास्त्रेषु निरूपणात्। आवृत्तिरत्र दार्ढ्याय। मनोनिवेशनप्रकारमाह—

पीयूषलहरी

रसनमाहेत्याशयेनाह—एवमिति। प्रेमपूरसमृदिति। प्रेमार्द्रेति। प्रेमसलिलयुक्ते चेतसि। कीर्तनमिति। "परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया, गृहीतचेता राजर्षे आख्यानं यदधीतवान्।" "निर्गुण्यस्था रमन्तेस्म गुणानुकथने हरेः" इति भागवतवाक्याच्छुकवत् कीर्तनमेव रसनम्। तत्प्रकारनिरूपणे पञ्चपदं विवृत्य पञ्चपदैस्तत्त्वातिक्रमं दर्शयन्नाह—क्लीँकार आदिरित्यारभ्य ब्रह्मप्राप्तो भवतीत्यन्तम्। शास्त्रेष्विति। "ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोन-

तदेषः श्लोकः । क्लीमित्येतदादावादाय कृष्णाय गोविन्दाय गोपीजनवल्लभायेति बृहन्मानव्या सकृदुच्चरेद्योऽसौगतिस्तस्यास्ति मङ्क्षु नान्यागतिः स्यादिति ।

भाष्यम्

तदेषश्लोक इति । क्लीमिति । निर्दोषकामबीजं प्रथममुक्त्वा ततः कृष्णाय गोविन्दाय गोपीजनवल्लभायेत्युक्त्वा ततः स्वाहाया निवेशः कर्तव्य इत्याह—बृहन्मानव्येति । बृहन्मानव्या स्वाहया संयुतं मन्त्रमजस्रं यः पठति तस्य मङ्क्षु तूर्णं गतिर्मोक्षो भवति । नान्येति । संसृतिरूपबन्धनकारिणी गतिर्न

पीयूषलहरी

लमूर्तिरत्वन् । ज्योतिर्मयो वायुमुपेत्य काले वय्वात्मना खं बृहदात्मलिङ्गम्" इति द्वितीयस्कन्धवाक्यात् । बृहन्मानव्येति । बृहत् श्रेष्ठश्चासौ मनुश्च बृहन्मनुः तत्सम्बन्धिनी बृहन्मानवी स्वाहाख्या तया संयुक्तम् । बन्धनकारिणी गतिर्नेति । "ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्पराः, अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" इति गीतावाक्यात् । अत्र नारायणस्तु क्लीमित्येवादावादाय कृष्णाय योगं गोविन्दायोत च गोपीजनवल्लभाय बृहद्धनश्यामं तदप्युच्चरेद्यो गतिस्तस्यास्ति मङ्क्षु नान्यागतिः स्यादिति पाठमङ्गीचकार । तत्र तावत्, श्यामपदेन संसारकारणरूपां मायां सङ्गृह्य तस्याश्चाविद्यारूपत्वमुक्त्वा तस्यास्तमोरूपत्वाच्छ्यामत्वमाह—तन्न मञ्जुलम् । " विद्याविद्ये मम तनू विध्युद्धव शरीरिणाम् । बन्धमोक्षकरी आद्ये माययैव विनिर्मिते " इति भागवतवाक्यान्मायायास्तयोर्जननीत्वेन तथा ग्रहणानुपपत्तेः । ज्ञानोत्पादनशीलाया अपि न केवलं तमोरूपत्वमिति

## भक्तिरहस्यभजनम्,

भाष्यम्

भवतीत्यर्थः । एवं द्वितीयस्योत्तरमुपपाद्य तृतीयमुत्तरयन्निष्कामां पुष्टिभक्तिं लक्षयति–भक्तिरहस्यभजनमिति।

पीयूषलहरी

तत्र दोषसद्भावादयमेव पाठो युक्तः । भागवते "सत्वं रजस्तम इति प्रकृतेर्गुणाः" इत्यत्र तथोक्तत्वात् । निष्कामामिति । फलाभिकाङ्क्षारहिताम् । पुष्टिभक्तिमिति तदनुग्रहैकलभ्याम् ।

अत्र कश्चित् भक्तेरात्मज्ञानरूपत्वमाह–तन्न, "योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया, ज्ञानं कर्म च भक्तिश्च नोपायोन्योस्ति कर्हिचित्" "ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम् । आख्याहि विश्वेश्वरविश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम्"इत्यादि वाक्येषु ज्ञानाद्भेदकथनात् । भजामीत्यनुव्यवसायस्थले जानामीत्यनुसायाभावात् । न च क्रिया भक्तिः, विरुद्धानुव्यवसायात्, प्रयत्नाजन्यत्वात् । शाण्डिल्यशतसूत्रीयभाष्यकृता तु "या प्रीतिरविवेकिनां विषयेष्वनपायिनीत्वामनुस्मरतः सा मे हृदयान्मापसर्पतु" इति वाक्ये विषयसप्तम्या प्रीतेः सविषयत्वं मन्तव्यम् । न च विषयजन्या प्रीतिरित्यर्थः सम्भवति । जनकसप्तम्याऽननुशासनादित्युक्तम् । नाप्युपासना भक्तिः, तस्या आशाप्राप्तसविषयकज्ञानरूपमनोवृत्तित्वात् । नच श्रद्धैव भक्तिः "श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति गीतावाक्ये श्रद्धायाः करणत्वेन भजनाङ्गत्वमुच्यते । एवं सति यदा भक्तिः श्रद्धास्यात्तदाङ्गश्रद्धायामपि श्रद्धान्तरापेक्षणादनवस्था । न चाङ्गाङ्गिभावनिर्वाहाय श्रद्धायां विशेषाभ्युपगमान्नानवस्थेति वाच्यम् । अप्रामाणिक विशेषाङ्गीकारापेक्षया सर्वानुभवसिद्धभक्तिभेदस्यैवास्थेयत्वात् । न चातिरिक्तत्वे कल्पनागौरवमिति शङ्क्यम् । प्रामाणिकगौरवस्यादुष्टत्वात् । अन्यथा सुखाभावस्यैव दुःखत्वकल्पनयातिरिक्तदुःखसिद्धि-

पीयूषलहरी

रपि न भवेत्। नापि पूजाया भक्तित्वम्। क्रियात्मकत्वेनैव दत्तोत्तरत्वात्। तस्याः "भक्तियोगं स लभते य एवं पूजयेतमाम्" इति भागवतीयैकादशवाक्ये भक्तितो भेदकथनात्। नच नवविधभक्तावर्चनस्यापि कथनात्तस्य कथं न भक्तित्वमिति शङ्क्यम्। श्रवणादिनवकमप्यधिकारिभेदेन क्रियमाणं कर्मज्ञानोपासनाभक्तिमार्गीयत्वानेकविधं भवति। तत्र "मदर्पणं निष्फलं वा सात्विकं निजकर्म तत्। राजसं फलसङ्कल्पं हिंसाप्रायादितामसम्" इत्येकादशे एकस्य कर्मणोऽधिकारभेदेन नानारूपत्वं विहितमतस्त्रिवर्गकामनया क्रियमाणं श्रवणादिः कर्ममार्गीयमेव। तादृशाधिकारिणः कर्ममार्गीयत्वात्। तथैव "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्। यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन मभक्तो लभतेऽञ्जसा" इत्यादिवाक्यैस्तुरीयाश्रमे ज्ञानोदयहेतुचित्तशुद्धिहेतुत्वेन क्रियमाणं ज्ञानमार्गीयम्। भागवते "यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः। तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्" इति वाक्ये तथा निरूपणात्। नच तुरीयाश्रमस्य कथं लाभ इति शङ्क्यम्। तत्र सन्दर्भे "भवताभिहितः स्वामिन् भक्तियोगोऽनपेक्षितः। निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः।" इति प्रश्नवाक्ये सर्वसङ्गतिराहित्यस्य तुरीयाश्रमधर्मत्वात्तल्लाभः। अत्र कामनाभेदादधिकारिभेदो ज्ञेयः। साक्षान्मोक्षसाधनत्वेन तान्त्रिकदीक्षापूर्वकं विहितत्वेन क्रियमाणमुपासनामार्गीयम्।

अत्रेदमाकूतम्। एकदेशे "आत्मारामोऽनयावृत्ति" इत्यन्तेनात्मारामधर्मानुक्त्वा तदर्थं सर्वगतस्य मनसः स्वस्मिन्नर्पणं चोक्त्वा तत्रानधिकारे "यद्यनीशो धारयितुम्"इत्यादिना निरपेक्षकर्मणा शुद्धसत्वस्य भक्तिमुक्त्वा "सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता।

पीयूषलहरी

स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्''इति स्वपदप्राप्तिमाज्ञाप्य ततो "भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता" इति प्रश्ने मल्लिङ्ग-मद्भक्तजनदर्शनस्पर्शनार्चनमित्याद्यष्टभिः पूर्वोक्तोपासनाशेषभक्तिकथने "वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्" इत्यनेन वैदिकी तान्त्रिकी दीक्षा गणिता । उपसंहारे च "इष्टापूर्तेन मामेव यो यजेत समाहितः, लभते मयि सद्भक्तिं मत्स्मृतिं साधुसेवया" इति भणितम् । तथा च साक्षान्मोक्षसाधनत्वेनेत्यंशः "सत्सङ्गलब्धया" इत्युपक्रमगतवाक्यतात्पर्यकः । तान्त्रिकीदीक्षेत्ययं वैदिकी तान्त्रिकी दीक्षेति वाक्यतात्पर्यकः । यत्पुनर्विहितत्वेनेत्यंशः स "यो यजेत समाहितः" इति विध्यनुवादकवाक्योक्तार्थस्मारकः । उपासनामार्गीयत्वनिश्चयस्तु "मां य उपासिता"इत्युपक्रम एव कथनात् । अथ वैष्णवमार्ग इत्युच्यते । मुक्तिदविष्णुधर्मेष्वेव निष्ठावत्वात् । अयमेव च "अर्चायामेव हरये पूजां यः श्रद्धयेऽहते । न तद्भक्तेषु चान्येषु, स भक्तः प्राकृतः स्मृतः"इत्यादिवाक्यानां विषयः । अर्चायामेव हरिबुद्ध्यान्यत्र भावाभावेन ज्ञानित्वाभावात् । तथा न तद्भक्तेष्वित्यनेन भक्तभावाभावोक्त्याऽर्चाहर्योर्भेदोक्त्या च भक्तिमार्गीयत्वाभावात् । भक्तपदेन च कर्ममार्गीयत्वाभावात् । श्रद्धापदेन विष्णु-धर्मनिष्ठत्वबोधनात् । प्राकृतपदेन ज्ञानिभक्ताद्यपेक्षया हीनत्वबोधनाच्च । भक्तिमार्गीयभक्तकृतभक्तिसाम्प्रदायिकदीक्षापूर्वकमोक्षसाधनत्वेन क्रियमाणं श्रवणादिकं प्रवाहवन्मुक्तिफलकत्वेनाभिमतत्वात्प्रावाहिकी भक्तिरित्युच्यते । इदमत्र मूलम्—"न युज्यमानया भक्त्या भगवत्यखिलात्मनि । सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये" इत्युपक्रम्य सतां लक्षणमुक्त्वा "त एव साधवः साध्वी सर्वसङ्गविवर्जिताः । सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते । सतां प्रसङ्गान्मम वीर्य-संविदो भवन्ति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति"इति कपिलदेवेनोक्तम् । अत्र सतां लक्षणस्य

पीयूषलहरी

भक्त्यर्थमुक्तत्वेन भक्तिमार्गीयभक्तकृतदीक्षापूर्वकत्वं लभ्यते। अपवर्गवर्त्मनीति पदेन मोक्षसाधनत्वं चेति। अधिकारिभेदेनैव दीक्षाभेदः। सा च पूर्वत्र तान्त्रिकी—अत्र पुनर्नारायणाष्टाक्षरादिभिर्वैदिकी प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणं श्रवणादिकं भक्तिमार्गे मर्यादाभक्तिरित्युच्यते। एकादशे "श्रद्धामृतकथयां मे" इत्युपक्रम्य निरन्तरकीर्तनं पूजायां निष्ठा स्तुतिभिस्तवनं परिचर्याऽऽदरः साष्टाङ्गप्रणामः भक्तेष्वधिकपूजा सर्वभूतेषु भगवद्भावः, भगवदर्थं लौकिकी क्रिया, लौकिकगाथया भगवद्गुणकथनम्, भगवति मनोऽर्पणम्, सर्वकामत्यागः, भगवद्भजनार्थं तद्विरोधिनामर्थभोगसुखानां त्यागः, इष्टदत्तहुततप्तानां वैदिकानां, व्रततपआदीनां स्मार्तानां च भगवदर्थत्वमित्येवं धर्मानुक्त्वा "एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते।" "भक्त्या सञ्जातया भक्त्या" इत्यादिवाक्येभ्य उत्कर्षश्चास्य प्रकारस्य। उपक्रमे पुनश्च कथयिष्यामीति परकारणत्वप्रतिज्ञानात्। समाप्तौ च "मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते" इति फलकथनाच्च।

अत्र भक्तिहंसविवृतौ विशेष उक्तः। अत्र दीक्षयोरनुक्तत्वात् "पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम्" इति कथनाच्च भगवानेवोपदेशकः। एवं च "एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्" इत्यत्रोत्तरार्धगतं मयीति पदं सम्बद्ध्यते तेन कृष्ण एव आत्मनिवेदनं सिद्ध्यति। गारुडे तु "सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत्। अभयं सर्वभूतेभ्यो दद्यादेतद्व्रतं हरेः" इति कण्ठत एवोक्तम्। गीतायां च "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्युक्तम्। एवं चात्मनिवेदनपञ्चाक्षरोपदेशपूर्वकं प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणं श्रवणादिकं मर्यादाभक्तिरिति सिद्ध्यति। अस्मिन् प्रकारे कामनाभेदादधिकारिभेदः। भगवदभिन्नश्रीमदाचार्यकृपाकटाक्षवित-

पीयूषलहरी

रितस्नेहोत्पत्त्यनन्तरं स्वव्यसनतः स्वतन्त्रपुरुषार्थत्वेन क्रियमाणमुत्तमं पुष्टिभक्तिरूपं, भागवते "मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोन्यत्कालविप्लुतम्"। अपवर्गादिकं स्वयमप्यासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः। "मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः"इत्यादिवाक्यकदम्बेन तथा निरूपणात्। एवं भक्तिशास्त्रोक्तेष्वपि श्रवणादिषु क्वचिद्भक्तित्वम्, क्वचिन्नेति प्रकरणापेक्षयाऽधिकारस्यैव प्रबलत्वेन नवविधभक्तौ गणितस्याप्यर्चनस्य भक्तिरूपत्वमनियतमिति न कोऽपि चोद्यावसरः। इदं यथा तथा तत्रैव श्रीमत्प्रभुचरणैर्निरूपितमतस्ततोवधेयम्।

नापीच्छा भक्तिः। इच्छाया अपुरुषार्थत्वेन भक्तेरप्यपुरुषार्थत्वापत्तेः। तथा सति "मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्" इत्यादिवाक्यानां विरोधः स्यात्। पुत्रादिविषयकस्नेह इच्छारूपत्वस्यानुभवविरुद्धत्वात्, इच्छामीत्यत्र स्निह्यामीत्यनुव्यवसायाभावात्, इच्छाया असिद्धमात्रविषयत्वमिति नियमभङ्गापत्तेश्च। तस्याः सिद्धासिद्धविषयत्वात्। तस्मान्नेच्छाविशेषो भक्तिः।

ननु तर्हि कोनामभक्तिपदार्थ इति चेदत्र ब्रूमः। भक्तिशब्दस्य प्रत्ययार्थः प्रेम धात्वर्थः सेवेति। तदेवं प्रतिपादितमावरणभङ्गे पण्डितपुरन्दरैः श्रीमत्पुरुषोत्तमचरणैः। प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययार्थः प्राधान्येनेति नियमादत्र धातुसामान्यार्थे शक्तोऽपि क्तिन् प्रत्ययो भजिसमभिव्याहारात्प्राधान्येन भजिक्रिया भक्तिरिति। सा च सेवात्मिका, सेवापदं च सातत्याभीक्ष्ण्यान्यतरपूर्वककायिकव्यापारविशेषे रूढम्, स्त्रीसेवौषधसेवेत्यादिप्रयोगदर्शनात्। तादृशव्यापारविशेषः परिचर्यारूप एव। स्वतन्त्रसेवाबोधकैः "मत्सेवया प्रतीतं च"इत्यादिवाक्यैरवगम्यते। तेषु सेवया पूर्णत्वकथनात्प्रेमपूर्वकत्वमपि लभ्यते। अन्यथा तस्याः कायक्लेशजनकत्वेन स्वतः

पीयूषलहरी

पुरुषार्थत्वोक्तिभङ्गप्रसङ्गात् । एवं च प्रेम्ण एव पूर्णत्वप्रयोजकत्वेन तस्य प्राधान्यं गम्यते, भक्तिलक्षणवाक्यैर्भक्त्यैवेति वाक्याच्च, अतः स एव प्रत्ययार्थः । कायिकव्यापारप्रधानत्वात् प्रकृत्यर्थः । सापि "मत्पादसेवाभिरता मदीहाः" इति सेवनमुपक्रम्य "पश्यन्ति ते मे" इति वाक्येनावगम्यते । अतो "भक्त्यामाम्" इत्यादावुभयं सङ्गृह्य ततः प्रेमसेवात्र तथोच्यत इति । एवं च भक्तिपदे योगरूढभावः । ननु भक्तिपदात्कथमुभयबोधो युगपद्वृत्तिद्वयविरोधादितिचेन्न, गङ्गायां घोषमत्स्यावित्यत्रेव प्रकृतेऽप्यबाधात् । वस्तुतस्तु लाघवेन सर्वत्र हर्यादिपदवच्छक्तिस्वीकारान्न किञ्चिदेतत् । नचैवं लक्षणत्वव्यवहारापलापप्रसङ्ग इति शङ्क्यम् । अप्रसिद्धशक्तिनिबन्धनत्वात्तस्य । किञ्च पुष्पवच्छब्दवदुपपत्तेः "यथैकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इतिवाक्यात् । सकृदुच्चरितेन पुष्पवच्छब्देन युगपद्दिवाकरनिशाकरयोर्बोधस्तथा प्रकृतेऽपि । ननु किमत्र शक्यतावच्छेदकम्? न तावत्प्रेमत्वम्, सेवाया अबोधापत्तेः । नापि सेवात्वम्, प्रेम्णोऽबोधापत्तेः । नापि प्रेमसेवासमुदायत्वं तत्, शक्यतावच्छेदकगौरवादितिचेन्मैवम्, प्रेमत्वं सेवात्वं चेत्युभयमपि शक्यतावच्छेदकम् । पुष्पवच्छब्दस्य रविचन्द्रत्वमिव । न च विकसनार्थकपुष्पधातोर्मतुबन्तस्य रूपमिति विकासवत्वं प्रकाशवत्वं वा शक्यतावच्छेदकमिति न तद्भेद इति दृष्टान्तवैषम्यमिति शङ्क्यम् । तस्याद्ययादावपि तुल्यत्वेन रविचन्द्रवाचकत्वनियमभङ्गप्रसङ्गात् । अतः कुसुमद्वयं कमलकुमुदरूपमङ्गीकरणीयम् । पद्मिनीपतिः सूर्यः, कुमुदांश्चन्द्र इत्यादिप्रयोगात् । अन्यथा दिवारात्रौ च विकासिनामन्येषामनेकपुष्पाणां सत्त्वात्तत्रापि प्रयोगः स्यात् । अत एव कश्चित् "कुसुमं कौशीतक्या विकसति रात्रौ दिवा च कूष्माण्ड्याः । यद्यपि तथापि तस्मादुत्कर्षः कमलकुमुदयोरेव" इत्याह । अतो लोकप्रसिद्ध्या पुष्पवच्छब्दरूढिरेवादरणीया । एवं च सिद्ध एव शक्यताव-

पीयूषलहरी

च्छेदकभेदः। न चैकयोक्त्येत्यस्य साधारणवचनेनेत्यर्थाद्रविचन्द्रसमूहत्वस्य शक्यतावच्छेदकत्वे प्राप्ते वनादिपदवदेकवचने च प्राप्ते तन्निवृत्त्यर्थमत्र द्विवचनविधिरिति न द्वयोस्तथात्वमिति पुनर्दृष्टान्तवैषम्यमिति वाच्यम्। साधारणत्वेन पुष्पवत्पदं रविचन्द्रसमूहवाचकं तच्च द्विवचनान्तं प्रयोक्तव्यमिति वाक्यभेदप्रसङ्गात्। कल्पनागौरवात्। दिवाकरनिशाकरावित्युद्देश्यगतसङ्ख्याया अविवक्षितत्वकल्पनापत्तेश्च। न च पुष्पवन्ताविति द्विवचनबलादेवोभयप्रतीतिरिति शङ्क्यम्। एकयोक्त्येति विशेषणवैयर्थ्यापत्तेः रामावित्यादाविवैकशेषेणैवोभयप्रतीतिसम्भवात्। ननु "दाराःपुंभूम्नि" इतिवदिदमैकवचननिवृत्त्यर्थमितिचेन्न, एवं सति पुष्पवच्छब्दादेवोभयप्रतीतिसिद्धयेष्टापत्तेः। नच पुष्पवत्त्वमेव शक्यतावच्छेदकमुभयसाधारणमितिवाच्यम्। मतुबन्ताद्विहितो भावप्रत्ययः प्रकृत्यर्थं गमयतीति न्यायेन पुष्पमेवेति पर्यालोचनया तस्योभयसाधारण्याभावात्। न च पुष्पवत्त्वेनैतस्य शक्यतावच्छेदकत्वे बाधकाभावः शङ्क्यः। तत्प्रकारकबोधापत्त्या रविचन्द्रत्वप्रकारबोधस्य सर्वानुभवसाक्षिकत्वात्। एतेन तदुभयत्वं तदन्यतरत्वं वा तथेति परास्तम्। एवं च "प्रेमपूर्वककायिकव्यापारवत्त्वम्" भक्तित्वम्। लौकिकक्रियावारणाय प्रेमपूर्वकेति। मानसव्यापारवारणाय कायिकेति। एवमपि पुत्रादिषु प्रेमपूर्वककायिकव्यापारेऽतिव्याप्तिः। तन्निवारणाय श्रीकृष्णविषयकप्रेमपूर्वककायिकव्यापारवत्त्वं भक्तित्वम्। न चैवं गुरुभक्तावव्याप्तिः। "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ"इति श्रुतेः। "आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्। न मर्त्यबुद्ध्या सूयेत सर्वदेव मयो गुरुः"इति भागवतवाक्यात् गुरुभगवतोरभेदादिति दिक्।

तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनः कल्पनम् ।

भाष्यम्

रहस्यभजनमेकान्तसेवनम् । तत्स्वरूपं दर्शयति—तदिति । तद्भजनममुष्यात्मनो वस्तुत एतदीयस्य जीवस्येहामुत्रोपाधिनैराश्येनैवैहिकामुष्मिकयावत्फलेप्साराहित्येन कल्पनम्,

पीयूषलहरी

एकान्ते सेवनमिति । तत्र बाधकाभावेन चित्तैकाग्र्यसम्पादकत्वात् । तत्स्वरूपमिति । भक्तिस्वरूपमित्यर्थः । एतदीयस्येति । "ममैवांशो जीवलोके जीवभूतः सनातनः" इति गीतावाक्याद्भगवदीयस्य । यावत्फलेप्स्वेति । "न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः" इति भागवतवाक्यात् । तदीयत्वसमर्थनमिति । स्वसस्वनिवृत्तिपूर्वकं भगदीयत्वस्थापनम् । वस्तुतस्तु त्रिविधस्यापि जगतो "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिभिस्तत एवाविर्भावतिरोभावयोर्निरूपणात् "क्रीडार्थमात्मन इद त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियो पर ईशकुर्युः" इत्यादिवाक्यैश्च त्रिविधस्यापि जगतस्तल्लीलाप्रयोजनकत्वाच्च तदीयेऽविद्ययाभिमतस्वीयत्वपरित्याग एव कर्तव्य इत्यर्थः । इदमेवचात्मनिवेदनम् । आत्मनिवेदिनो हि भगवत्सेवार्हा नेतरे । भागवते "एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत" इतिवाक्यादात्मनिवेदनानन्तरमेव स्वतन्त्रपुरुषार्थरूपायास्तस्याः प्राप्तेरुक्तत्वात् । युक्तं चैतत् । संसारस्याहंममात्मकत्वेन "मुक्तोपसृप्यव्यपदेशात्"इति वैयासन्यायेन संसारिभिर्भगवतः सेव्यत्वाभावात्"मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" इति वाक्यात् सर्वमिदं तवेति बुद्ध्या सर्वत्रान्यथास्वरूपपरित्यागेऽहं तवास्मीति वृत्त्या च स्वस्मिन्नन्यथात्वनिवृत्तौ मुक्तिस्ततः

# एतदेव च नैष्कर्म्यम् ।

भाष्यम्

तदीयत्वसमर्थनम् । अन्तर्बाह्यसेवया तद्द्रढीकरणमित्यर्थः । कृषू सामर्थ्ये इतिधात्वर्थात् । एतदेव स्वस्य तदीयत्वसमर्थनमेव नैष्कर्म्यम् सन्यासः । अन्येतु भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनमिति पठन्ति ।

पीयूषलहरी

सेवेति सरलः पन्थाः । अन्तरिति । मानस्या मनसि बहिस्तनुवित्तजाभ्यां भगवदीयत्वस्य दृढीकरणं यथा पुनरज्ञानं नोदयेत्तथेत्यर्थः । सन्यास इति । "काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः" इति गीतावाक्येन काम्यत्वपरित्याग एव सन्यासः । न तु भगवदीयकर्मपरित्यागरूपः । तस्य जातिभ्रंशकरत्वात् । ब्रह्मवित्कृतकर्मणां तु "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' इति श्रुत्या वीर्यवत्तरत्वप्रतिपादनात् । अतो भगवदर्थमेव कर्मकरणाय सन्यासः । "यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् । इति गीतावाक्यात् । पाठान्तरमाह—अन्येत्विति । अर्थस्तु अस्य परमात्मनो भजनं सेवनं भक्तिः । भज् धातोः सेवार्थकत्वात् । तत्सेवनं कथमिति शङ्कायां प्रकारमाह—तदिति । ऐहिकामुष्मिकयावदिति । पशुपुत्रधनागाराद्याकाङ्क्षैहिकी स्वर्गाद्यारभ्य मोक्षपर्यन्ताकाङ्क्षापारलौकिक्येवमुभयोस्त्यागेनामुष्मिन् ब्रह्मणि मनःकल्पनम्, मनसस्तत्प्रवणकरणम् । यथान्यत्र कदापि न गच्छेत्तथा । "चेतस्तत्प्रवणं सेवा" इति श्रीमदाचार्यचरणवाक्यात् । अत्रेदमवधेयम्—प्रवणपदं हि क्रमनिम्नोर्वीप्रह्वचतुष्पथक्षणायत्तेषु रूढम् । "प्रवणं क्रमनिम्नोर्व्यां प्रह्वे नाथ चतुष्पथे । आयत्ते च" इत्यनेकार्थात् । मनश्च पार्थिवम् । अन्नमयं हि सौम्य मनः" इति श्रुतेः । तत्स्वरूपलक्षणं तु सङ्कल्पविकल्पात्मकत्वम् ।

भाष्यम्

तत्रापि यावत्फलनैराश्यस्य प्रविष्टत्वादामुत्रिकमध्ये मुक्तेरपि प्रवेशात्तदनपेक्षत्वं तु सिद्धमेव। पुष्टिभक्तानां भगवत्स्वरूपेतरानपेक्षणात्, "भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" "मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः" इत्यादिप्रमाणव्यक्तत्वाच्च।

पीयूषलहरी

कामजनकत्वं कार्यलक्षणम्। "यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः" इति वाक्यात्। तन्नित्यमिति केचित्। तन्न। "तन्मनोऽसृजत्" इति श्रुतेः। केचित्तु सकलशरीरव्यापिमनोरथिकाभिमानिकसुखदर्शनाद्व्यापकमाहुः तन्न मञ्जुलम्। उत्तरमीमांसायाम् "तथा प्राणाः" इत्यधिकरणे जीवातिदेशाणुत्वात्। न च सकलशरीरव्यापिसुखानुपलब्धिः" इति शङ्क्यम्, तस्य चन्द्रदेवताकत्वेन नानाकिरणशालित्वाभ्युपगमात्, जीववत्। उत्तरमीमांसायां "व्यतिरेको गन्धवत्" इति सूत्रे तथा निर्णयात्। एवं च सति कृष्णे पूर्वं प्रह्वं नम्रं तत आयत्तं तदधीनं ततः क्रमेण तदेकतानम्। "तानाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम्। यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे" इत्यादिवाक्योक्तप्रकारां गभीरतां प्राप्तं यच्चेतस्तदेव सेवारूपम्। समाधाविव भगवति लयं प्राप्तमिति यावत्। न तु वृत्त्यन्तरविशिष्टमिति निष्कर्षः। पाठान्तरेऽप्यर्थतौल्यं निरूपयति—तत्रापीति। तदनपेक्षत्वमिति। मुक्त्यपेक्षारहितत्वमित्यर्थः। स्वरूपेतरानपेक्षणादिति। "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः।" "न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा समञ्जसत्वाविरहय्य काङ्क्षे" इत्यादिभागवतवाक्यात्। तदनपेक्षत्वे प्रमाणं दर्शयति—भगवदीत्वेनेति। आद्यं पञ्च-

भाष्यम्

नचाष्टादशार्णमन्त्रमुक्त्वा तदधिष्ठातुः स्वरूपध्यानादेरमृतफलकत्वस्य कथनाद्भक्तौ भक्तानां च कथं तदनपेक्षेति शङ्क्यम्। "तं यथा यथोपासते तथैव भवति तद्धैतान्भूत्वावति" इति श्रुतेर्मुक्तिसाधनत्वेन जानतामेव तत्फलम्। भगवत्स्वरूपमेव स्वतन्त्रपुरुषार्थत्वेनानुभवतां तु तदेव फलम्। ये यथा मां प्रपद्यन्ते" इति श्रीमुखवाक्यात्। अथवा भगवन्तं सेवमानानां तदनपेक्षत्वेऽपि सेवास्वभावादेवाञ्जसानुषङ्गिकमपि

पीयूषलहरी

मस्कन्धीयषष्ठाध्यायस्थम्। "यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इति। द्वितीयमपि तत्रैव चतुर्दशाध्यायस्थं "यो दुस्त्यजान् क्षितिसुत स्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्। नेच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः" इति। शङ्कामाह—न चेति। उपनिषदि मन्त्रस्य तदधिष्ठातृदेवोपासनप्रकारस्य, तत्फलस्य च निरूपणात्। पुष्टिभक्तौ भक्तस्य, च कथमाकाङ्क्षारहितत्वमिति न शङ्क्यमित्याशयः। समाधानमाह—तं यथायथेति। यत्प्रकारकं भजनं तत्प्रकारकमेव तत्फलम्। मुक्तिसाधनत्वेनेति भजनेन मम मोक्षो भवत्विति मुमुक्षया भक्तिं मोक्षसाधनत्वेन मन्वानस्तत्प्राप्नोति। स्वतन्त्रपुरुषार्थत्वेनेति "भक्तिः सिद्धेर्गरीयसी" "मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" "मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्याविशिष्यते" इत्यादिवाक्यैः सेवैव परमं साधनं फलं चेति भजनानन्दानुभवं कुर्वताम्। तदेवेति। भगवत्स्वरूपमेव परमं फलम्। भिन्नप्रकारमाह—अथवेति। आनुषङ्गिकमपीति। यथा सेवायां मानस्याः फलरूपत्वं तनुवित्तजयोः साधनरूपत्वं तत्साधनरूपयोरनुष्ठाने संसारतापशमनं

कृष्णन्तं विप्रा बहुधा यजन्ति । कृष्णं सन्तं बहुधा आराधयन्ति । गोपीजनवल्लभो भुवनानि दध्रे

भाष्यम्

तद्भवति । "हृतात्मनो हृतप्राणाँश्च भक्तिरनिच्छतोऽपि गतिमण्वीं प्रयुङ्क्ते" इति वाक्यात् । परं न ते तत्र रमन्ते । तत्र प्रकारविशेषमाह—कृष्णमिति । सदानन्दं तं लोकवेद-प्रसिद्धं विप्रा ब्राह्मणा बहुधा विविधप्रकारेण यजन्ति पूजयन्ति कृष्णमिति स्फुटम् । गोपीजनवल्लभ इति गोपिकाकान्तः, भुवनानि भूर्लोकव्यतिरिक्तानन्याल्लोकान् जगदेतत् परिदृश्यमानं जगच्च दध्रे धृतवानित्यर्थः । "एतस्य वाक्षरस्य प्रशासने गार्गि! द्यावाभूमी विधृते तिष्ठते" इति श्रुतेः ।

पीयूषलहरी

ब्रह्मावबोधनं चानुषङ्गिकं भवति, तथेहापि संसारदुःखनिवृत्तेरेव मुक्तिरूपत्वात्तस्या आनुषङ्गिकत्वम् । तत्र प्रमाणं लक्षयति हृतात्मन इति । इदं भागवतवाक्यम् न ते तत्रेति । निष्कामभक्ता मोक्षादौ न मोदन्ते । देहेन्द्रियान्तःकरणात्मादिना भगवत्स्वरूपानन्दानुभवाभावात् । निष्कामभजनश्रैष्ठ्यप्रतिपादनाय प्रथमं तस्य बहुप्रकारकं यजनमाहेत्याशयेनाह—सदानन्दमिति । विविधप्रकारेणेति । यज्ञव्रततपोदानयोगादिभिः, कर्मज्ञानभक्त्यादिप्रकारेण च । तत्रापि सकामनिष्कामभेदैश्च । अथवा "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इति भागवतोक्तनवविधभक्त्या, अथवा पुष्टिप्रवाहमर्यादाभेदेन, यद्वा सेवोपासनापूजाप्रकारेणेत्यर्थः । तस्य सर्वधारकत्वमाह—भूर्लोकव्यतिरिक्तानिति । धृतवानिति । "त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे" इति भागवतवाक्यात् । इति श्रुतेरिति । बृहदारण्यकश्रुतेः ।

स्वाहाश्रितो जगदेतत्सुरेताः । वायुर्यथैको भुवनं प्रविष्टो जन्येजन्ये पञ्चरूपो बभूव । कृष्णस्तदेकोऽपि जगद्धितार्थं शब्देनासौ पञ्चपदो विभाति ।

भाष्यम्

तत्र विशेषमाह—स्वाहाश्रित इति स्वाहाख्यया स्वशक्त्या युतः सुरेताः सुन्दरवीर्यवानित्यर्थः । भुवनानीत्युक्त्वैतज्जगदिति कथनं दृश्यस्यालीकत्वनिवारणाय । पञ्चपदत्वप्रयोजनमाह—वायुरिति । यथा समीरण एकोऽपि भुवनं शरीरं, प्रविष्टः कृतप्रवेशो जन्येजन्ये सकलप्राणिविग्रहे पञ्चरूपः प्राणापानव्यानोदानसमानरूपो बभूव अभवत्, तथा कृष्णो वासुदेव एकोऽपि "एकमेवाद्वितीयं ब्रह्म" इति श्रुत्याऽद्वितीयोऽपि जगद्धितार्थं स्वोत्पादितक्रीडाभाण्डरूपस्य जगतस्तत्तत्पदेन द्यावाभूमिसूर्याचन्द्रमसाग्नीनामतिक्रमपूर्वकं स्वप्राप्तये । शब्देन शब्दस्वरूपेण असौ एतदुपनिषत्प्रतिपाद्यमानः पञ्चपदः पञ्च-

पीयूषलहरी

सुन्दरवीर्यवानिति । अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनशीलम्, सच्चिदानन्दरूपम्, वीर्यं यस्य "अहं बीजप्रदः पीता" इति गीतावाक्यात् । अथवा "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः" इति वाक्यात्पूर्णवीर्यवत्वस्य तत्रैव निरूपणात्सुरेतस्त्वम् । अलीकत्वनिवारणायेति । मर्त्येतरलोकानामपरोक्षत्वेन तथा ग्रहणम् । अन्यथा पुनरुक्तिदोषापत्तेः । क्रीडाभाण्डरूपस्येति । "क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियो पर ईश कुर्युः" इति भागवतवाक्यात् । शब्दस्वरूपेणेति । क्लींकृष्णायेत्यादिशब्दरूपेणेत्यर्थः ।

ते होचुः। उपासनमेतस्य परमात्मनो गोविन्दस्याखिलाधारिणो ब्रूहीति। तानुवाच। यत्तस्य पीठं हैरण्याष्टपलाशमम्बुजं तदन्तरानलास्त्रयुगं तदन्तरालादर्णाखिलबीजं कृष्णाय नम इति बीजाढ्यं सब्राह्मणमादायानङ्गगायत्रीं यथावदालिख्य भूमण्डलं मूलवेष्टितं कृत्वा

भाष्यम्

यन्मन्त्रस्वरूपो विभाति प्रकाशत इत्यर्थः। उपासनविषये तमनुयुञ्जन्ति मुनयः—एतस्येति। उपनिषत्प्रतिपाद्यमानस्य परमात्मनः अखिलाधारिणः सकलकारणरूपस्योपासनमुपासनाप्रकारं ब्रूहि कथय। तानुत्तरयन् ब्रह्मा प्राह—यत्तस्य पीठमिति। यत्तस्य भगवतः पीठमासनं हैरण्याष्टपलाशमम्बुजमिति। अष्टपदाष्टपर्णकमलाकारं भवति। तदन्तरा तन्मध्ये अनलास्त्रयुगमग्निबीजं 'रं' इति, तस्य युगं युग्मं पलाशद्वयोपरिलेख्यम्। तदन्तरालात्तन्मध्यादवशिष्टपर्णेष्वेकोपर्यर्णाखिलबीजं सर्वाक्षरमूलभूतमोङ्कारं निवेश्यावशिष्टपञ्चपर्णेषु "कृष्णायनमः" इति पञ्चाक्षरं निवेश्य बीजाढ्यं रंकारयुतं सब्राह्मणं ब्रह्मणा सहितमादाय सङ्गृह्य, अनङ्गगायत्रीं "कामदेवाय विद्महे पुष्पबाणाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्" इति मन्त्रं यथावत् विधिपूर्वकमालिख्य लिखित्वा, भूमण्डलं मूलवेष्टितमिति मूलेनाष्टाक्षरमन्त्रेण

पीयूषलहरी

अनङ्गगायत्रीमाह—कामदेवायेति। मन्त्रमहोदधौ त्रयोविंशतरङ्गेऽस्ति।

**वासुदेवं रुक्मिण्यादिस्वशक्तिं नन्दादिवसुदेवादि-पार्थादिनिध्यादिवीतं यजेत्सन्ध्यासु प्रपत्तिभिरुपचारैः ।**

भाष्यम्

वेष्टितं कृत्वा वासुदेवं सर्वगुहाशयं रुक्मिण्यादिस्वशक्तिं स्वीयाष्टशक्तिसहितं नन्दादीति नन्दवसुदेवपार्थादियुक्तं भगवन्तं सन्ध्यासु त्रिकालं सर्वकालं वा प्रपत्तिभिः शरण-साधकभावैः । शरणागतेः षड्विधत्वाद्बहुवचनम् । उपचारैः

पीयूषलहरी

वासुदेवमिति । "वसुर्विष्णुर्विष्णुर्वसुः" इति । श्रुत्या वसुं दीव्यति तेन दिव्यत इति वासुदेवः शुद्धसत्वात्मकः "सत्वं विशुद्धं वसुदेवशब्दितम्" इति भागवत वाक्यात् । तस्मिन्नाविर्भूतो वासुदेवः । यद्वा वसति सर्वत्र, वासयत्याच्छादयति स्वयमिति वासुः, दीव्यति क्रीडति विजिगिषते व्यवहरति द्योतते स्तूयते दृश्यते गच्छतीति, वासुश्चासौ देवश्चेति वासु-देवः । भारते "छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः, सर्वभूताधिवा-सश्च वासुदेव स्ततः स्मृतः ।" इति वाक्येन सभापर्वान्तरीयसार्धत्रयशत-काध्याये तथोक्तत्वात् । अन्यत्र च ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्" "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः, ततः स वासुदेवेति विद्वद्भिः परिपठ्यते । सर्वाणि तत्र भूतानि वसन्ति परमात्मनि, भूतेषु च ससर्वात्मा वासुदेव इति स्मृतः" इत्यादि श्रुतिविष्णुपुराणभारता-दिवचनैः सर्वाच्छादकत्वेन सर्वभूताधिवासकत्वेन निरूपणाच्च । तमेव गुहाशयत्वेन लक्षयति—सर्वगुहाशयमिति । "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः" इति भागवतवाक्यात् । शरणसाधकभावै-रिति । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति गीतावाक्येन कृष्णशरणस्यैव मायानिवर्तकत्वात् । तस्य षड्विधत्वं तु "अनुकूलस्य

तेनास्याखिलं भवत्यखिलं भवति । तदिह श्लोका भवन्ति । एको वशी सर्वगः कृष्ण ईड्य—

भाष्यम्

सेवाद्रव्यैः पूजयेत् सेवेतेत्यर्थः । सेवनफलमाह—तेन सेवनेनास्य जीवस्याखिलं सर्वं भवति "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा" इति भगवद्वाक्यात्। तस्य स्वरूपमाह—तदिहेति । एक इति । अद्वितीयो "वासुदेवो वा इदमग्र आसीन्नब्रह्म न च शङ्करः" "एको हावै नारायण आसीन्न ब्रह्मा नेशानः" "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्याद्यनेकश्रुतिप्रामाण्यात्समाधिकरहितः । वशी सर्वं वशमस्यास्तीति वशी सकलजगन्नियामकः । सर्वगः सर्वान्प्रति गमनशीलः सर्वगुहाशयो, नत्वन्तर्यामिवत्प्रतिशरीरं भिन्नः, किन्त्वेक एवान्तर्यामिष्वप्यान्तर इति। कृष्णः सदानन्दः। ईड्यः

पीयूषलहरी

सङ्कल्पः प्रतिकूलविसर्जनम्। करिष्यत्यतिविश्वासो भर्तृत्वे वरणं यथा । आत्मनैवेद्यकार्पण्ये षड्विधा शरणागतिः" इति कारिकया श्रीमदाचार्यचरणैर्निरूपितम् । सर्वमिति । प्रपन्नजनस्य सर्वं स्वयमेव करोति । "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।" "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज, अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इत्याद्यनेकवाक्यात् । तत्र भागवतं प्रमाणयति—सर्वमिति । एवं ज्ञानं सेवाप्रकारं च निरूप्य सर्वात्मकत्वाय तत्स्वरूपमाहेत्याशयेनाह—तस्येति । षडैश्वर्यवतो गोविन्दस्य । तस्याद्वितीयत्वे श्रुतिप्रमाणं लक्षयति वासुदेवोवेति । नत्वन्तर्यामिवदिति। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्या तेषां प्रति-

भाष्यम्

स्तुत्यः सर्ववेदैः शास्त्रैश्च "सर्वे वेदा यत्पदमामनन्ति" इति वेदे रामायणे चैव पुराणे भारते तथा। आदौ मध्यावसाने च हरिः सर्वत्र गीयते" इतिवाक्याच्च।



पीयूषलहरी

शरीरं भिन्नत्वात्। अस्य तु "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः।" इत्यत्रैकस्यैव सर्वगुहाशयत्वकथनेनान्तर्यामिष्वप्यान्तरत्वात्। स्तुत्य इति। "प्रतत्ते अद्य शिपिविष्टनामार्यः शंसामि वयुनानि विद्वान्। तं त्वा गृणामि तव समतव्यान् क्षयन्तमस्य रजसः पराके" इत्यादिश्रुत्या स्तोतुं योग्य इत्यर्थः। श्रुत्यर्थस्तु शिपिविष्ट हे विष्णो तत् लोकवेदप्रसिद्धं ते तव नाम, अहं प्रशंसामि, कीदृक्रूपोऽसि त्वम्, अर्यः मम स्वामी मदनुग्रहाय समर्थः। पुनः कीदृक् स्वरूपः वयुनानि ज्ञानानि ज्ञानोपायाँश्च विद्वाञ्जानानः, तादृशं त्वामहं गृणामि स्तौमि, कीदृशं तवसं प्रवृद्धं सर्वतः, अहं कीदृशः अतव्यान्, अतवीयान् क्षुद्रः। पुनः कथंभूतम्—अस्य रजसः, रञ्जनात्मकप्रपञ्चस्य पराके परस्तात्, क्षयन्तं निवसन्तमिति। ननु "शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे" इति कोषाच्छिपिविष्टपदस्य शङ्करवाचकत्वेन कथं विष्ण्वर्थकत्वमिति चेन्न, शान्तिपर्वणि "शिपिविष्टेति चाख्यायां हीनरोमा च योऽभवत्। तेनाविष्टं तु यत्किञ्चिच्छिपिविष्टेति च स्मृतः। यास्को मां ऋषिरव्यग्रो नैत यज्ञेषु गीतवान्। शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम्। स्तुत्वा मां शिपिविष्टेति यास्को ऋषिरुदारधीः, मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान्" इति सार्धत्रिशताधिकद्वयाध्याये भगवतैव तथा प्रतिपादनात्। तत्रैव द्विचत्वारिंशाध्याये "अनीकसाह पुरुषः शिपिविष्ट उरुक्रमः" इति युधिष्ठिरवाक्यात्। निरुक्तेऽपि यास्काचार्येण तथा निरूपणाच्च। महेश्वरादिपदानामपि मुख्यतया तद्वाचकत्वमग्रे वक्ष्यामः।

वेदैरिति। वेदस्तुत्यादौ तत्र श्रुतिं प्रमाणयति सर्वे वेदा इति।

## एकोऽपि सन्बहुधा यो विभाति ।

भाष्यम्

एकोऽपीति समाधि-सहितोऽपि बहुधा बहुप्रकारेण त्रिविध जगद्रूपेण जडजीवान्तर्यामिभेदेनावतारादिरूपेण च विभाति

पीयूषलहरी

शास्त्रैः स्तवनेऽप्याह—वेद इति । जगद्रूपेणेति । "सदेव सौम्येदमग्र असीत्," "ततो वै सदजायत" "सर्वं खल्विदं ब्रह्म"इत्यादि श्रुतिभिर्नाम-रूपात्मकजगद्रूपेणेत्यर्थः । न च "अस्ति भाति प्रियं रूपं नाम चेत्यर्थ-पञ्चकम् । आद्यं त्रयं ब्रह्मरूपं मायारूपं ततः परम्"इतिवाक्यात्तयो-र्मायिकत्वेन मिथ्यत्वाद्ब्रह्मणस्तद्रूपत्वे । मिथ्यात्वापत्तिरिति शङ्क्यम् । तयोः सद्रूपत्वात् । तथाहि "सदेव सौम्येदमग्र आसीत्" "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" "प्रज्ञानं ब्रह्म" "स ईक्षाञ्चक्रे" "आनन्दो ब्रह्मेति व्यजानात्"इत्यादिश्रुतिभिः सद्रूपत्वेन चिद्रूपत्वेन सर्वावभासकत्वेनानन्दमयत्वेन तं यथा वेदो निरू-पयति तथैव "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्" "नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः" इत्यादि छान्दोग्यबृहदारण्यकश्रुतिभिस्तदिच्छां तत्कर्तृत्वं नामरूपयोश्च सत्यत्वं निरूपयति अतो यथा त्रयाणां ब्रह्मणि बोधकत्वं तथैव तयोरपीति ज्ञेयम् । न च तयोः सत्त्वे ब्रह्मणः सवि-शेषत्वापत्तिरिति शङ्क्यम् । त्रयाणां सत्वेऽपि दोषतादवस्थ्यात् । जडजीवान्तर्यामीति "सर्वं सर्वमिदं जगत्" "सहैतावानास"इत्यादि-श्रुतिभिर्जडरूपः । "योह खलु वावैतस्यांशो यश्चेतामात्रः" इत्यादि-श्रुत्या जीवरूपः । तत्सृष्ट्वातदेवानुप्राविशत्"इतिश्रुत्याऽन्तर्यामि-रूपः । अवतारादीति । अहमेनमेतद्रूपेणोद्धरिष्यामीतीच्छया मत्स्य-

तं पीठं येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती

भाष्यम्

प्रकाशते। तं लोकवेदप्रसिद्धम्, पीठं पदं, ये भक्ताः, धीरा धृतियुक्ताः "धृतिःक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" इति स्मृतेः। अनुभजन्ति सवन्ते। अनुभजनं नामसाम्प्रदायिकभक्तानुसरणम्। तेषां भक्तानां शाश्वती त्रिकालबाधिता सिद्धिः सायुज्यं,

पीयूषलहरी

वामननृसिंहादिरूपेण प्रादुर्भूतः। पदमित्यारभ्य सायुज्यमित्यन्तं भाष्यमुत्तानार्थम्। अन्योपासकानामिति। तेषां न सायुज्यप्राप्तिरित्यर्थः। ननु तत्र तत्र तेषामपि फलदत्वेन कीर्तनात्कथं न सायुज्यमिति चेन्न। सर्वैरपि यथाधिकारं फलं दीयते। तदपि "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तः स्तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान् हितान्" इति गीतावाक्यात्तान् द्वारीकृत्य भगवतैव सम्पाद्यते। तथापि तत्फलस्य "अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्" इतिगीतावाक्येनान्तवत्वसोपासकानामल्पमेधस्त्वस्य च निरूपणान्न सायुज्यम्। पूर्णफलदानस्य स्वस्मिन्नेव नियतत्वात्। विभूतिरूपेषु साधनफलयोर्व्यवस्थया कृतत्वाच्च। ननु कथं तेषां फलस्यान्तवत्वमितिचेच्छृणु गीतायां "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति वचसा ब्रह्मलोकपर्यन्तगन्तॄणां पुनरावृत्तिमाज्ञाप्य "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्युक्तया स्वसदननिविष्टस्यैव पुनरावृत्तिरहितत्वस्य साधितत्वात्। भवत्वेवं तथापि तद्द्वारैव लब्धफलानामल्पमेधस्त्वं कथम्? इत्थम्, नहि त एवं जानन्ति यदस्मात्कृष्ण एव फलं

नेतरेषाम्। नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो

भाष्यम्

नेतरेषामन्योपासकानां कर्मिणां ज्ञानिनां वा, तस्य भक्त्यैकसमधिगम्यत्वात्। पीठस्थमितिपाठेऽपि पीठं पीठिकाश्रीमद्वृन्दावनादिद्योतिका यथा श्रीगोवर्धनस्वरूपे तस्मिंस्तिष्ठति तम्। चतुरस्त्रादिपीठभेदा अपि साम्प्रदायिकसेव्यस्वरूपदर्शनादवगन्तव्याः। तमेव विशेषयन्नाह—नित्योनित्यानामिति। आविर्भावतिरोभावशालिपदार्थानां सर्वेषां मध्ये नित्यः, सदा वर्तमानस्त्रिकालाबाधितस्वरूपः "स सर्वं भवति" "स वै सर्वमिदं जगत्" इत्यादिश्रुतिवाक्यैस्तद्रूपतयैव सर्वप्रपञ्चस्य नित्यत्वसाधनात्। चेतनश्चेतनानामिति। सर्वप्राणिनामपि यश्चैतन्यप्रदो "यथाग्नेः क्षुद्रा विस्फुलिङ्गाव्युच्चरन्ति तथा ब्रह्मणः सकाशात्सर्वे जीवा कपूयचरणा रमणीयचरणा" इति श्रुतेर्जीवानां तच्चिदंशत्वात्। "नित्योनित्यानां चेतनश्चेतनानाम्" इत्यत्र चक्षुषश्चक्षुरितिवदाधिदैविकत्वमपि ध्वन्यते। एकः स्वयमे-

पीयूषलहरी

प्रयच्छतीत्यल्पमेधस्त्वमतः सायुज्यं तदीयानामेव। कर्मिणामिति। निष्कामतया तत्सम्पादन आत्मसुखस्य लाभात्। सकामतया च स्वर्गादिलोकप्राप्तिरिति सायुज्याभावः। ज्ञानिनामिति। "यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते नाहास्योद्ग्रहणाय भवति" इति श्रुत्याऽक्षरे लयस्यैव प्रतिपादनात्। भक्त्यैकसमधिगम्यत्वादिति। "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इतिगीतावाक्यात्। आविर्भावतिरोभावशालिपदार्थानामिति। उत्पत्तिविनाशरहितानाम्।

ननु "यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः। नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्" इति वाक्येन पुरोदृश्यमानस्य

विदधातिकामान् । तं पीठगं येऽनुभजन्ति धीरास्तेषां

भाष्यम्

कोऽपि बहूनां जीवानां कामान् अभिलषितान् विदधाति पूरयति तं पूर्वप्रतिपादितं पीठगं पूर्ववत् । यद्वा व्यापिवैकुण्ठस्थम् । "नाकस्य पृष्ठे" इत्यादिश्रुतिभ्यः । धीराः पूर्वोक्ता भक्ता अनुभजन्ति सेवन्ते । तेषां भक्तानां शाश्वतं त्रिका-

पीयूषलहरी

मिथ्यात्वकथनात्कथमाविर्भावतिरोभावाविति चेन्न, श्लोकस्य भिन्नार्थकत्वात् । तथाहि-यदिदं यादवकुलं चक्षुरादिभिर्गृह्यमाणं नश्वरं तन्मायिकं विद्धि । "विप्रशापः कथमभूद्वृष्णीनाम्"इत्यनुयोगोत्तरप्रकरणे सुविचारितत्वादिति श्रीमत्प्रभुचरणा विद्वन्मण्डने । इदमत्र ज्ञेयम्— कृष्णो हि यथा कुहना मानुषवपुषा स्वभक्तसमुद्धारार्थं यदुकुलजलधौ प्रादुरासीत्तथैव "नन्दाद्या ये व्रजे गोप याश्चामीषां च योषितः । वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः । सर्वे वै देवताप्राया उभयोरपि भारत"इति दशमस्कन्धीयप्रथमाध्यायवाक्यात्सकलवृन्दारकवृन्दस्य मायामानुषवपुषा यदुकुलोद्भूतत्वेन तत्कुलस्य मानुष्यमात्रग्रहणं मायामनोमयमेव । अथवा मूलस्वरूपभूते वस्तुनि । वस्तुतस्तु "आविर्भावतिरोभावाः स्वपदे तिष्ठन्ति"—"आत्मत आविर्भावतिरोभावौ"इत्यादिश्रुतिभिराविर्भावतिरोभावशालिनि पदार्थे चक्षुरादिभिरज्ञानाद् गृह्यमाणं यन्नश्वरत्वादिकं तन्मायामनोमयं विद्धिरित्यन्वयान्नश्वरत्वभानस्यैव मायामनोमयत्वम् । ज्ञाने सति "सर्वं खल्विदं ब्रह्म"इतिश्रुत्या ब्रह्मरूपत्वात् । अतः पदार्थानामाविर्भावतिरोभावावेवेति निश्चयः ।

त्रिकालाबाधित इति । "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः ।" "नारायणो वा इदमग्र आसीन्न ब्रह्मानेशानः" "अहमेवा-

सुखं शाश्वतं नेतरेषाम् । एतद्विष्णोः परमं पदम् ।

भाष्यम्

लाबाधितं सुखं आनन्दघनप्राप्तिरूपं नेतरेषामिति पूर्ववत् । "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति"इतिश्रुत्या तत्प्राप्तेरेव परमसुखरूपत्वात् । एवं तत्स्वरूपप्राप्तेः परमसुखरूपत्वं निरूप्य निरुपधिभक्तेरेव तत्प्रापकत्वम्प्रतिपादयत्येतदिति । विष्णोः सर्वत्र व्यापनशीलस्य महेश्वरस्य परमं सर्वोत्कृष्टं पदं चरणं तं

पीयूषलहरी

समेवाग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम्"इति श्रुतिभागवताभ्याम् । तद्रूपतयेति । "इदं हि विश्वं भगवानिवेतरो यस्मिन् जगत्स्थाननिरोधसम्भवाः ।" "यथा हिरण्यं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्"इत्यादिभागवतवचनैस्तथात्वात् । चैतन्यप्रद इति । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"इति श्रुतेः । एकोऽपीति । "एकमेवाद्वितीयं ब्रह्म"इति श्रुतेः । व्यापिवैकुण्ठस्थमिति । "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" इतिश्रुत्या परमव्योम्नि स्थितमित्यर्थः । आनन्दघनप्राप्तिरूपमिति । भगवत्सायुज्याख्यं । तत्र प्रमाणमाह—यो वै भूमेति । श्रुतिरियं छान्दोग्यस्था । तत्प्राप्तेरेवेति । भगवत्स्वरूपप्राप्तेरेव । निरूपधिभक्तिरेवेति । "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोसि मे" इति गीतायां प्रतिज्ञावाक्यादैहिकामुष्मिकोपाधिरहिताया एवेत्यर्थः । महेश्वरस्येति । कृष्णस्येत्यर्थः ।

ननु "महेश्वरस्त्र्यम्बक एव नापरः" इति कविकालिदासोक्त्येशत्वं तु त्रिमूर्तिसाधारणं महेशपदवाच्यत्वं तु शिवसमनियतमेव । यतः सर्वेषां देवपदव्यपदेशः, शिवस्य तु महादेवेति महेशपदस्य तत्रैव युक्तत्वादिति

पीयूषलहरी

चेन्न। कृष्ण एव तद्व्यपदेशस्य मुख्यत्वात्, इतरत्रौपचारिकत्वाच्च। तथाहि "योमामजमनादिं च वेत्ति लोकमहेश्वरम्" "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्" इति गीतायां नवमदशमवाक्याभ्यां स्वमुखेनैव महेश्वरत्वस्य निरूपणात्। तथा ज्ञानाभाववतां च मूढत्वस्य स्फुटीकृतत्वाच्च। अन्यत्रापि च "पुरुषः पुष्कलः पुण्यः पुष्कराक्षो महेश्वरः। शान्तः शान्तिकरः शास्ता शङ्करः शन्तनुः सुतः। त्वं स्वाहा त्वं स्वधा देवस्त्वं सुधा पुरुषोत्तमः। नमो देवाधिदेवाय विष्णवे शाश्वताय च" इतिनारसिंहे चत्वारिंशाध्याये शिवेनैव स्वमुखेन तथा सिद्धान्तितत्वात्। किञ्च भारते ससुरा ऋषयो यदोपब्रह्मगन्धमादने ययुस्तदा विमानेनायान्तं परमेश्वरं दृष्ट्वा सर्वे प्राञ्जलयः समुत्थाय तेषु पितामहोग्रीभूय यथावत्तमभ्यर्च्य स्तुवन् जगाद "विश्वावसुर्विश्वमूर्तिर्हि विश्वे विष्वक्सेनो विश्वकर्मा वशी च। विश्वेश्वरो वासुदेवोसि तस्माद्योगात्मानं दैवतं त्वामुपैमि" इत्यादि भीष्मपर्वान्तरीयपञ्चषष्ठीतमाध्यायवाक्येषु। अग्रे च "जय विश्व महादेव" इत्यत्र "निसर्गसर्गनिरत कामेश परमेश्वर" "स एष शाश्वतो देवः सर्वगुह्यमयः शिवः। वासुदेव इति ज्ञेयो यं मां पृच्छसि भारत" इत्यादिषु च विश्वेश्वरमहादेवपरमेश्वर शिवादिनाम्ना व्यक्तमुक्तत्वात्। आनुशासनिकद्विचत्वारिंशदध्यायेऽपि "नारायणाय शुद्धाय शाश्वताय ध्रुवाय च। भूतभव्यभवेशाय शिवाय शिवमूर्तये। शिवयोने शिवाद्याय शिवपूज्यतमाय च। घोररूपाय महते युगान्तकरणाय च" इत्यादि वाक्यैः शिवघोरादिनामत्वेन शिवकारणरूपत्वेन शिवाद्यत्वेन शिवपूज्यतमत्वेन च स्तुतत्वाच्च न च परमेश्वरमहादेवादिपदानां कृष्ण औपचारिकत्वमिति शङ्क्यम्। यतस्तत्रैव "नमश्चकार तुष्टात्मा पुरुषं परमेश्वरम्" इत्युक्त्वा श्रीकृष्णमुपक्रम्य तस्य परमेश्वरत्वं चाख्याय "त्वयाऽसौ कः स्तुतः" इत्यनुयोगे "यत्तत्परं भविष्यं च भवितव्यं च यत्परम्। भूतात्मा

भाष्यम्

## शिवादिभिरुपासितं ये भक्ता—

पीयूषलहरी

च प्रभुश्चैव ब्रह्म यच्च परं पदम्। तेनास्मि कृतसम्वादः'' इत्यादि षट्षष्ठितमाध्याये ब्रह्मप्रतिवचनैरनौपचारिकत्वस्य सुव्यवस्थापितत्वात्। किञ्च नृसिंहमुपक्रम्य ''एष सर्वेश्वरः, एष सर्वज्ञ'' इत्यादिना तत्स्वरूपं निरूप्य ''प्रपञ्चोपशमं शान्तं शिवमद्वैतं च चतुर्थं मन्यन्ते'' इतिश्रुत्या नृसिंहतापिन्यां ''सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं, विश्वं नारायणं देवमक्षरं परमं पदम्। विश्वतः परमान्नित्यं विश्वं नारायणं हरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति। पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्''- इति नारायणोपनिषदि च तस्यैव शिवादिपदाभिधेयत्वम्। कौर्म्येऽपि ''दृष्ट्वा देवं जगद्योनिं विष्णुं विश्वगुरुं शिवम्। मा निन्दस्वैनमीशानं भूतानामेकमव्ययम्। कथं देवो महादेवः शाश्वतः कालवर्जितः। कालेन हन्यते विष्णुः कालात्मा कालरूपधृक्''इत्यादिवाक्यैः षोडशाध्याये कालेशानमहादेवादिपदानां विष्णुपरकत्वेन कथनात्तेषां तद्वाचकत्वस्यैव मुख्यत्वात्तस्यैव महेश्वरत्वम्। काव्यादीनां तु तत्राप्रमाण्यमेव। ''काव्यादीनामसत्यत्वान्नोपयोगः कथंचन''इत्यादिवाक्यात्। ननु ''दशचन्द्रमसिं रुद्रःशतचन्द्रं तथाम्बिका''इति भागवतवाक्यादसिदानादिना पृथोरुपकृतत्वेन तस्य च ''एष साक्षाद्धरेरंशो जातो लोकरिरक्षया''इति वाक्याद्धरिरूपत्वेन शङ्करस्यैव महेश्वरत्वमिति चेन्न, तस्य ''वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः। पादयोररविन्दं च तं वै मेने हरेः कलाम्''इतिवाक्येन तत्कलामात्रत्वात्। तत्तत्प्रदानमप्युपायनरूपमेव ''द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम्''इति वाक्यात्।

प्रकृतमनुसरामः। शिवादिभिरुपासितमिति। ''द्वे वने स्तः कृष्णवनं भद्रवनम्''इत्युपक्रम्य तयोर्द्वादशवनान्यन्तर्भाव्य तेषु सिद्धिं गता

पीयूषलहरी

द्वादश देवास्तिष्ठन्तीति निरूप्य तत्र कृष्णस्य द्वादशमूर्तीः समाख्याय "एकां रुद्रा यजन्ति"इतिश्रुत्या तद्भजनं फलं चोत्तरतापिन्यां निरूप्य "प्रथमां मथुरां रम्यां सदा ब्रह्मादिवन्दिताम्"इतिश्रुत्या तद्धाम्नोऽपि ब्रह्मादिवन्दितत्वस्य निगमनात्।

ननु "शिवमद्वैतं चतुर्थं मन्यन्ते" इति माण्डूक्यश्रुत्या शिवस्य परमतत्त्वरूपेण कथनादिदमसङ्गतमितिचेन्न, तदादिपदानां तत्रैव मुख्यत्वस्य प्राङ्निरूपितत्वात्। माण्डूक्येऽपि "ॐमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानभूतं भवद्भविष्यदिति सर्वमोङ्कार एव"इतिश्रुत्या ओङ्कारमुपक्रम्य सर्वस्य तद्रूपत्वमाह। पुनश्च "सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पाद्"इतिश्रुत्या सर्वस्य ब्रह्मरूपत्वं प्रणवस्य च तद्रूपत्वं विशदीकृत्यात्मनो ब्रह्मत्वमुक्त्वा तस्य चतुष्पात्त्वमाख्यायाह "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते" इति। अत्र प्रपञ्चोपशमकर्तारं शान्तं शान्तविग्रहं शिवं कल्याणस्वरूपमद्वैतं "एकमेवाद्वितीयं ब्रह्म"इतिश्रुत्या केवलं चतुर्थं मन्यन्त इत्येवार्थः। शिवस्य संहारकत्वेन शान्तत्वाभावात्। प्रणवशब्दवाच्यस्यैव प्रकृतत्वेन तस्य च "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्मृतः" इति गीतावाक्याद्ब्रह्मवाचकत्वेन तत्त्वस्य चैतदुपनिषद्गीतादिसकलशास्त्रेण कृष्णसमनियतत्वाच्च। अग्रे च "स आत्मा स विज्ञेयः" इति कथनेन तच्छब्दस्य पूर्वपरामर्षित्वात्पूर्वोक्तोङ्काररूपब्रह्मण एव ग्रहणात्। अत्र कश्चित् "विश्वाधिको रुद्रो महर्षिः" "सर्वाधिको रुद्रो महर्षिः"इति श्रुती श्वेताश्वतरस्थ इत्युक्त्वा तस्य सर्वाधिकत्वं निरूप्य सर्वेषु कृष्णस्यापि प्राप्तत्वेन कृष्णस्य शिवभक्तत्वमुक्त्वा "केन व्रतेन सन्तुष्टो भुक्तिं मुक्तिं प्रयच्छसि"इतिविष्णुप्रश्ने "शृणु विष्णो प्रवक्ष्यामि व्रतानां व्रतमुत्तमम्। शिवार्चनं रुद्रजप उपोष्यं च दिनत्रयम्। वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा। चतुर्ष्वपि बलिष्ठं हि शिवरात्रिव्रतं हरेः"इतिशिवपुराणे ज्ञानसंहितायां द्विसप्ततितमाध्यायस्थ-

पीयूषलहरी

शिवप्रतिवचनानि प्रमाणत्वेनाह, तन्न मञ्जुलम् । नेमे श्रुती श्वेताश्वतरोपनिषत्स्थे, किन्तु तयोरेका "विश्वाधिको रुद्रो महर्षिः"इति महानारायणोनिषत्स्था । तत्र तावत्पूर्वानुवाक्ये "अणोरणीयान्"इतिमन्त्रे ईशाख्यस्य शिवस्य प्रस्तुतात्ममहिमरूपत्वेनैव सिद्धत्वात् । मध्येऽपि "यो देवानां प्रथमम्"इति मन्त्रे महर्षित्वादिभिर्मुख्यविभूतितया सिद्धत्वाच्च । "दहरं विपापमिम्" इत्युपान्तमन्त्रेऽपि तद्धृदयाकाशस्यैव ग्राह्यत्वात् "सत्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । सत्वे च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते" इति चतुर्थस्कन्धीयेन सतीं प्रतिशिववाक्येन "अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम् "इत्यादिना "विष्णोराराधनार्थं मे व्रतचर्या पितामह" इत्यन्तेन गारुडद्वितीयाध्याये ब्रह्माणं प्रति शिववाक्येन तदुपबृंहणाच्छिवस्य मातृत्वेनैव निरूपितत्वात् । द्वितीया तु तत्रापि नास्ति । न च श्वेताश्वतरेऽपि तत्र विश्वाधिक इति पाठात् । शिवपुराणे हि तावत् "विद्येश्वरी रुद्रशतरुद्रकोटिरुद्रोमाकैलासवाय्विति सप्तसंहिताः । तत्राद्यापञ्चविंशत्यध्याया । द्वितीयायां सृष्टिखण्डो विंशत्यध्यायः । सतीखण्डश्च चत्वारिंशदध्यायः । पार्वतीखण्डः पञ्चपञ्चाशदध्यायात्मकः । कुमारखण्डो विंशत्यध्यायः । युद्धखण्ड ऊनषष्ठितमाध्यायः । तृतीया च द्विचत्वारिंशदध्यायात्मिका । चतुर्थी चत्वारिंशदध्याया । पञ्चम्येकपञ्चाशदध्याया । षष्ठी त्रयोविंशत्यध्याया । सप्तम्यां पूर्वखण्डः पञ्चत्रिंशदध्यायात्मकः, उत्तरखण्डश्चैकचत्वारिंशदध्यायात्मकः । एवं सम्पूर्णेऽपि ग्रन्थे ज्ञानसंहिताया अन्यास्वपि च संहितासु द्विसप्ततितमाध्याया भाव एव । किञ्च "विद्येश्वरं तथा रौद्रं वैनायकमनुत्तमम् । औमं मातृपुराणं च रुद्रैकादशकं तथा । कैलासं शतरुद्रं च कोटिरुद्राख्यमेव च । सहस्रकोटिरुद्राख्यं वायवीयं ततः परम् । धर्मसंज्ञं पुराणं चेत्येवं द्वादशसंहिताः ।" इति शैवे वायुसंहिता पूर्वखण्डीयप्रथमाध्यायवाक्यैस्तस्यद्वादशसंहितात्मकत्वाङ्गीकृतावपि तत्र संहितागणनायां ज्ञानसंहिता-

# ये नित्योद्युक्तास्तं यजन्ति न कामात्।

भाष्यम्

नित्योद्युक्ता अजस्रं भगवत्सेवायामालस्यादिदोषरहिताः। "आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः" इतिवाक्यात्। यजन्ति सेवन्ते। न कामात्। ऐहिकामुष्मिकफलाकाङ्क्षा-

पीयूषलहरी

नामविरहान्न तस्यास्तदन्तरत्वमिति निश्चयः। तथापि तत्रत्यवाक्यैस्तद्व्रताचरणादिकं तु न युज्यत एव। यतस्तत्रैव "इति व्रतफलं श्रुत्वा देवा विष्णुमुखास्तदा। आनन्दं परमं प्रापुः स्वं स्वं धाम ययुस्तदा" इति वाक्येन सर्वमनुश्रुत्य विष्णुप्रमुखानां तेषां स्वधामगमनस्य विहितत्वात्। ननु तथापि "उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्"-इति चतुर्थस्कन्धीयवाक्योक्तसनातनब्रह्मपदनिर्देशस्य कथं सङ्गतिरिति चेत्तत्र "ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम्। सनन्दाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम्। उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम्। विद्यातपोयोगपथमास्थितं तमधीश्वरम्। चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम्। लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम्। अङ्गेन सन्ध्याभ्ररुचा चन्द्ररेखाश्च बिभ्रतम्। उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्। नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम्" इतिसन्दर्भे। पृच्छते नारदाय सनातनं ब्रह्म प्रवोचन्तमुक्तगुणविशिष्टं शिवं ददृशुरित्येवार्थः। अन्यथा क्रियावैयर्थ्यापत्तेः। "तव वरद वराङ्घ्रावाशिषेहाखिलार्थे ह्यपि मुनिभिरशक्तैरादरेणार्हणीये। यदि रचितधियं मां विद्यलोकोपविद्धं जयति न गणये तत्त्वत्परानुग्रहेण" इति तत्रैव सप्तमाध्याये शङ्करवदनविहितानुग्रहकारित्ववरदत्वयोर्विरोधोऽपि।

अजस्रमिति। मध्ये विघ्नो न कार्यः। तस्य फलविलम्बहेतुत्वात्। ऐहिकामुष्मिकेति। गीतायां "ये तु सर्वाणि कर्माणि मयि सन्यस्य

तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ।
यो ब्रह्माणं विदधाति पूर्वं यो विद्यां तस्मै गोपायतिस्म

भाष्यम्

राहित्येन, नतु तद्वत्वेन। तत्सत्वे तदेव समर्पयेन्नतुस्वात्मानन्दम्। तेषामिति। निष्कामभक्तानामेवासावुपनिषत्प्रतिपाद्यो गोपरूपो लीलाधृतगोपालस्वरूपस्तदेव पूर्वप्रतिपादितमेवात्मपदं ब्रह्मपदं प्रयत्नात्कृपापात्रैरेव तस्य प्राप्यत्वात्प्रयत्नेन प्रकाशयेत् दर्शयतीत्यर्थः। एवं तस्या भगवत्प्रापकत्वमुपपाद्य तत्सिद्धये शरणं निरूपयति यो ब्रह्माणमिति।ब्रह्माणं चतुराननं पूर्वं प्रथमं विदधाति प्रकटीकरोति। यः परमात्मा विद्यां स्वरूपज्ञानप्रदां यस्तस्मै तद्धिताय गोपायति रक्षति नान्यस्मायनधिकारिणे ददाति। स्मेति प्रसिद्धं तच्छास्त्रादौ तं वेदप्रतिपादितं पूर्णपुरुषोत्तमं देवं क्रीडाशीलमात्मबुद्धिप्रकाशं जीवानामात्मनिष्ठा स्वरूपनिष्ठा या बुद्धिस्तस्याः प्रकाशकम्,

पीयूषलहरी

मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्। मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः''इति भगवद्वाक्यात्। तदेवेति। मुक्त्याद्यभीष्टमेवेत्यर्थः। भक्तानामेवेति। एव कारेणान्येषां निषेधः। लीलाधृतेति। भागवते "न ते भवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे''इति दशमवाक्यात्। पूर्वप्रतिपादितमित्यारभ्यक्रीडाशीलमित्यन्तं स्फुटार्थम्। बुद्धिरिति। गीतायां "तेषां सततयु-

कृष्णस्तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुः शरणं व्रजेत् ।

भाष्यम्

एतादृशं कृष्णचन्द्रं मुमुक्षुः संसारं तितीर्षुः शरणं तवास्मीति बुद्ध्या व्रजेद्गच्छेदित्यर्थः । ब्रह्मशङ्करादीनामपि श्रीकृष्णशरणस्यैव मायानिवर्तकत्वात् । पूर्वोक्तं भजनं दृढीकर्तुं

पीयूषलहरी

क्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति भगवद्वाक्यात् । न चात्र बुद्धियोगमक्षरज्ञानमिति शङ्क्यम्, तस्य पुरुषोत्तमविषयकत्वात् । अन्यथा "भक्त्या मामभिजानाति"इतिगीतावाक्यविरोधपात्तेः । संसारमिति । अभिगत्यात्मकम् । ब्रह्मशङ्करादीनामपीति । नन्विदं विसंवादीव भाति । ब्रह्मेशादीनां मायाभिभवस्तन्निवृत्तिश्चेति चेच्छृणु । नवमे "अहं सनत्कुमारश्च नारदो भगवानजः । कपिलोप्यान्तरतमो देवलो धर्म आसुरिः । मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः । विदाम न वयं सर्वे यन्मायां माययावृताः ।" इति चतुर्थाध्याये शिवेनैव मायावृतत्वस्य कथनात् । किञ्च "नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः । यन्मायया मुषितचेतस ईशदैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः" इति योषिद्रूपं दिदृक्षुणा सोमेन संस्तुतस्तं यावत्तद्दर्शयतिस्म तावदात्मानं विस्मृत्याभ्यद्रवच्छङ्करः । अनुधावन्नेतः प्रस्कन्दानन्तरमात्मानं प्रत्यपद्यत । तञ्च स्वमायापरिभूतमवलोक्य तद्रूपं तिरोधाय "सेयं गुणमयी माया न त्वामभिभविष्यति"इतिवाक्येन मायाभिभवाभावं व्यततार कृष्णचन्द्रः । न च शरणगमनाभावः शङ्क्यः । तत्रैव भगवन्तं परिक्रम्य "यं मामपृच्छस्त्वमुपेत्य योगात्समाः सहस्रान्त उपारतं वै । स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेद ।" इति पार्वतीं प्रति

ॐकारेणान्तरितं ये जपन्ति गोविन्दस्य पञ्चपदं मनुम् ।
तेषामसौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ।

भाष्यम्

शरणं गत्वा किं कुर्यादित्याकाङ्क्षायामाह—ॐकारेणान्तरितमिति । प्रणवसहितं गोविन्दस्य भगवतः पञ्चपदं पञ्चाङ्गयुतं मनुं मन्त्रं ये भक्ता जपन्ति निष्कामतयाऽनुच्चैरुच्चारयन्ति तेषां तद्भक्तानां न तु सकामानामन्योपासकानां वा । असौ भगवानात्मरूपं स्वीयमानन्दमात्रकरपादमुखोदरादिविग्रहं दर्शयेत्तस्य दर्शनविषयं कुर्यान्नान्यथा । तस्माद्यत एवं ततो मुमुक्षुः संसारनिवृत्तिकामो नित्यशान्त्यै त्रिकालाबाधितशान्तिलब्धये अभ्यसेत् पुनःपुनः कीर्तयेदित्यर्थः । भक्त्यैव

पीयूषलहरी

स्वध्येयत्वेन कृष्णस्य निरूपणात् । दशमे च "सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये । सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः" इत्यादिवाक्यैः शरणगमनस्य सुव्यक्तत्वाच्च । न चेतरेषामेव तदिति शङ्क्यम् । तत्रैव "ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः । देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन्" इति वाक्येन स्फुटं निरूपणात् । रुद्रमोक्षणाध्यायेऽपि सुप्रसिद्धत्वाच्च । अनुच्चैरिति । सर्वैरश्रुतस्यैव जपपदवाच्यत्वात् । तादृशभक्तानेव हरिः स्वात्मानन्दं ददादीत्याशयेनाह—तद्भक्तानामिति । नत्विति । तथासति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इतिगीतावाक्यात्कामितमेव ददाति, न तु स्वात्मानन्दमिति यथा, तथा प्रागेव निरूपितमस्माभिः । नान्यथेति निष्कामभजनेनैव तत्प्राप्तिर्नान्योपायस्तत्रेत्यर्थः । एवं भगवतो निष्कामभजनलभ्यत्वं दृढीकृत्य तत्प्राप्तये तस्यैव मुख्यत्वात् तदाहेत्याशयेनाह यत एवमिति ।

एतस्मादेव पञ्चपदादभूवन्गोविन्दस्य मनवो मानवानाम् । दशार्णाद्यास्तेऽपि सङ्क्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ।

भाष्यम्

संसारनिवृत्तिर्भक्त्यैव नित्यशान्तिस्तयैव च पुरुषोत्तमप्राप्तिरिति निगूढाशयः । मुक्तैरेव भगवतः सेव्यत्वात् । दशार्णाद्यन्यमन्त्रेभ्योऽस्य श्रैष्ठ्यमाह–एतस्मादिति । एतदुपनिषत्प्रतिपादिताद्गोविन्दस्य परब्रह्मणो मानवानां जनानां हिताय दशार्णाद्या "गोपीजनवल्लभाय स्वाहा"इत्याद्या दशाक्षरसंयुता मनवो मन्त्रा पञ्चपदादष्टादशार्णादेवाभूवन्प्रकटीबभूवुः । तेऽपि दशार्णादयो मन्त्रा अपि भूतिकामैरैश्वर्यकामैः सङ्क्रन्दनाद्यै सङ्क्रन्दनादिभिर्भक्तैर्यथावद्यथाविधमभ्यस्यन्ते

पीयूषलहरी

संसारनिवृत्तिरिति । गीतायां "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्, भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्"इतिभगवद्वाक्यात् । भक्त्यैव नित्यशान्तिरिति । गीतायां "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति"इति भगवद्वाक्यात् । पुरुषोत्तमप्राप्तिरिति । गीतायां "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया"इति श्रीकृष्णवाक्यात् । मुक्तैरेवेति । "मुक्तोपसृप्यव्यपदेशात्"इति वैयासन्यायात् । अस्येति । अष्टादशाक्षरस्य गोपालमन्त्रस्य।गोपीजनवल्लभायेति । दशार्णमन्त्रस्तु मन्त्रमहोदधौ चतुर्दशतरङ्गेऽस्ति । दशार्णादिमन्त्राणामष्टादशाक्षरगोपालमन्त्रात्प्रभवं वर्णयति। अष्टादशार्णादिति।सङ्क्रन्दनादिभिर्भक्तैरिति।

ते पप्रच्छुः। तदुहोवाच। ब्रह्मसदनं चरतो मे ध्यातः स्तुतः परमेश्वरः परार्द्धान्ते सोऽबुध्यत। गोपवेषो मे पुरुष-

भाष्यम्

कीर्त्यन्त इत्यर्थः। ते पप्रच्छुरिति। पूर्वोक्ता मुनयः पुनः प्रश्नं कृतवन्तः। यद्यप्यत्रानुयोगविषयस्यानुक्तत्वेऽप्युत्तरत एव तस्योपलब्धेः। कथं भवताऽष्टादशार्णो लब्ध इति? उत्तरं पठति तदुहोवाचेति। मन्त्रप्राप्तिप्रकारमाह—ब्रह्मसदनमिति। ब्रह्मभुवनं चरतो विचरतो मे मम ध्यातो ध्यानविषयीकृतः, स्तुतः "स्तुतिप्रियो विष्णुः" इति वाक्यात् स्तुत्या स्तवनविषयीकृतः, परार्धान्ते ममार्धायुष्यबुध्यत विज्ञप्तिमङ्गीकृतवानित्यर्थः। ततः किं जातं तदाह—गोपवेषो मे पुरुष

पीयूषलहरी

सङ्क्रन्दयति रिपुस्त्रीरिति व्युत्पत्त्या सङ्क्रन्दन इन्द्रः। "सङ्क्रन्दनो दुश्च्यवनः" इत्यमरात्तदादिभक्तैरैश्वर्यप्राप्तये पठ्यन्ते। तेषां प्रश्नं निरूपयति—पुनस्ते मुनय इति। भगवत्स्वरूपमननशीला "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः। ननु प्रश्नविषयाभावात् कथं प्रश्नः? इति शङ्काव्युदासायाह—उत्तरत इति। पूर्वं ते पप्रच्छुरित्युक्त्वा ततस्तदुहोवाचेति कथनात् कुतः प्राप्तोऽयं मन्त्र इति प्रश्नस्यानुक्तसिद्धत्वात्। ध्यानविषयीकृत इति। "दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः। अतप्य तस्याखिललोकतापनं तपस्तपीयांस्तपतां समाहितः" इति द्वितीयवाक्यात्। स्तवने श्रुतिप्रमाणमाह—स्तुतिप्रिय इति। परार्धायुषेति। परस्य ब्रह्मण आयुषोऽर्धं परार्धं, तस्यान्तेऽर्धायुःसमाप्तावित्यर्थः। गोपवेश इति। अयं पाठः सिद्धान्तमुक्तावलीटीकायां श्रीमत्पुरुषोत्तमचरणैरादृतः, स एव चात्र

स्तदाविर्बभूव।

भाष्यम्

इति। लीलाधृतगोपालस्वरूपः सर्वान्तरात्मा प्रकटोऽभूत्। कोपदेष्टा मे पुरुषः परस्तादाविर्बभूवेति पाठे तु कं सुखं तस्योपदेष्टा—उपदेशकः। सृजतोऽपि मे मम मोहाभावाय,

पीयूषलहरी

रक्षितः। प्रकटोऽभूदिति। तावन्मात्रमायां दूरीकृत्य "अनित्ये जननं नित्ये परिच्छिन्ने समागमः। नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा"इति वाक्यात् दृग्विषयो जात इत्यर्थः। मुद्रितपाठं विवेचयति—सुखमिति। ब्रह्मरूपमिदं सकलमिति ज्ञानेन मोहाभावरूपं सुखमित्यर्थः। मोहाभावायेति "भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः। नेह मानः प्रजासर्गे बध्येयं यदनुग्रहात्"इति द्वितीये ब्रह्मवाक्यात्। अत्रेदमवधेयम्—"तथापि नाथमानस्य नाथ नाथय नाथितम्। परावरे यथारूपे जानीयान् ते त्वरूपिणः" इति वचसा परावरज्ञानं "क्रीडस्यमोघसङ्कल्प ऊर्णनाभिरिवोर्णुते। तथा तद्विषयान्धेहि मनीषां मयि माधव"इति"क्रीडाज्ञानं भगवच्छिक्षितमहम्"इति शिक्षा, "यावत्सखा सख्युरिवेषते कृतः। प्रजाविसर्गे विभजामि भोजनम्। अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोजमानिनः" इति वाक्याद्गर्वाभावश्चेति चतुष्टयं चतुराननो यदा प्रार्थयाञ्चकार, तदा "ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम्। सरहस्यं तदङ्गं च गृहाण गदितं मम"इति श्लोकेन ज्ञानम्। "यावानहं यथाभावो यद्रूपगुणकर्मकः। तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्"इति विज्ञानं "अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्। पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम्"इत्यादिनोत्पत्त्यादिषु स्वातन्त्र्यमभिन्ननिमित्तोपादानकत्वमादिमध्यावसानेषु स्वस्य वर्तमानत्वं च प्रकटय्य "ऋतेर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि। तद्विद्यात्मनो मायां

ततः प्रणतो मयाऽनुकूलेन हृदा मह्यं सृष्टयेऽष्टादशार्ण-

भाष्यम्

पुरुषः पुरं शरीरं तस्मिन् शेतेऽसौ पुरुषः । पुरस्तादग्र आविर्बभूव स्वात्मानं दर्शितवानित्यर्थः । ततः प्राकट्यानन्तरं मया ब्रह्मणाऽनुकूलेन हृदा तत्प्रवणचित्तेन प्रणतः प्रह्वीभावेन कृतनमस्कारो मह्यं ब्रह्मणे सृष्टये सृष्टिकरणायाष्टादशार्ण-

पीयूषलहरी

यथा भासो यथा तमः" इत्याच्छादकत्वान्यथाप्रतीतिहेतुरूपत्वेन माया-स्वरूपद्वैविध्यं निरूप्य "एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः। अन्वय-व्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा" इति वाक्येन तत्रोपपत्तिं चाख्याय मदात्मकमिदं त्वमपि मद्रूपो माया चेति विनिश्चित्य मच्छासनं कुर्विति चतुःश्लोक्या शिक्षां प्रदायैतदनुस्मरणमेव मोहाभावकारणमिति विवेक्तुं "एतन्मतं समातिष्ठ परमेण समाधिना। भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति वाक्येन द्रुहिणाय मोहाभावं भगवान् ददाविति दिक् ।

पुरुष इति । "नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् । व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते" इति शान्तिपर्वणि द्वाद-शाधिकद्विशततमाध्यायवाक्यात् । पुरुषु भूरिषु उत्कर्षशालिषु सर्वेषु-सीदतीति वा, पुरूणि भवनानि अनन्तकालस्थस्तं तं करोतीति वा । पूर्णत्वाद्वा पुराणत्वाद्वा सदनाद्वा पुरुषः "पूरणात्सदनाच्चैव ततोऽसौ पुरुषो यतः" इत्युद्योगपर्वीयैकोनसप्ततितमाध्यायवाक्यात् । स्वात्मानं दर्शितवानिति । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुत्यातीन्द्रीयोऽपि स्वकृपया "ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् । सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्श्वमुख्यैः परिसेवितं विभुम्" इति द्वितीये नवमवाक्यादपरोक्षविग्रहो जात इत्यर्थः । तत्प्रवणचित्तेनेति । इतरविस्मृतिपूर्वकतदासक्तचित्तेन ।

स्वरूपं दत्त्वान्तर्हितः । पुनस्ते सिसृक्षतो मे प्रादुरभूवन् । तेष्वक्षरेषु विभज्य भविष्यज्जगद्रूपं प्राकाशयम् । तदिह कात्पृथिवी ततो लादग्निर्बिन्दोरिन्दुस्तत्सम्पातारात्तदर्कमिति ।

भाष्यम्

स्वरूपमष्टादशाक्षरसंयुतं मन्त्रं दत्त्वा प्रदायान्तर्हितस्तिरोदधे । सृष्टिकाले मन्त्रवर्णानामाविर्भावमाह—पुनरिति । ते मन्त्रस्था वर्णाः सिसृक्षतः स्रष्टुमिच्छोर्मे मम संमुखं प्रादुरभूवन् प्रकटीबभूवुः । वर्णविभागमाह—तेष्विति । एतदुपनिषत्प्रतिपाद्यमन्त्रप्रसिद्धेष्वक्षरेषु वर्णेषु विभज्य विभागं कृत्वा भविष्यद्भावि जगद्रूपं जगतः स्वरूपं प्राकाशयम् व्यक्तं कृतवानहमिति । तत्प्रकटनप्रकारमाह—तदिहेति । तत्र प्रथमं कामबीजं क्लींकारं विभजति कात्पृथिवीति ककारात्पृथिवीं प्रकटय्य ततस्तदनन्तरं लादग्निं रलयोरभेदाद्रमित्यग्निबीजेनाग्निं बिन्दोर्बिन्दुतः इन्दुं चन्द्रं तत्सम्पाताद्बिन्दोस्तत्र स्थापनेन तदर्कं शास्त्रप्रसिद्धं सूर्यमित्यनेन प्रकारेण कामबीजविभागैरहं प्राकाशयमित्यर्थः । एवं बीजविभागकार्यं निरूप्य

पीयूषलहरी

मन्त्रमिति । गोपालमन्त्रम् । प्रकटनप्रकारमिति । मन्त्राक्षरैरेव प्रकटनप्रकारमितिभावः । तत्र प्रथमं क्लींकारं विभजते—ककारादिति । क्लीँकारस्थात्ककारात् । रलयोरभेदादिति रमित्यग्निबीजं तेनाग्निम् । बिन्दुत इति क्लीँकारस्थादनुस्वारात । स्थापनेनेति । क्लीँका-

क्लीँकारादजस्रम् कृष्णादाकाशं स्वाद्वायुमुत्तरात्सुरभिं विद्याः प्रादुरकार्षं प्रादुरकार्षमिति ।

भाष्यम्

तस्मादेव निरन्तरं सृष्टिकरणमाह—क्लीँकारादिति । मन्त्र-विभागं निरूपयति—कृष्णादाकाशमिति । कृष्णपदादाकाशं व्योम "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति श्रुतेः । स्वात्स्वाहाया वायुं समीरणमुत्तराद्गोविन्दात्सुरभिं गां विद्याश्चतुर्दशविद्याश्च प्रादुरकार्षमव्यक्तरूपेण स्थितं व्यक्तं कृतवान्नतु नूतनं परिकल्पितवानित्याशयः । अन्यथा प्रादुरकार्षमिति न वदेत् । तेन पदार्थानामाविर्भावतिरोभावावेव, नतूत्पत्तिविनाशौ । आवृत्तिर्दार्ढ्याय । उत्तरपदकार्य-

पीयूषलहरी

रोपरि स्थापनेन । एवं क्लीँकारं विभज्य कृष्णादिपदात्तदाविर्भावं निरूपयति—कृष्णपदादिति । नतु नूतनमिति । "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" इतिश्रुतेः । आविर्भावतिरोभावावेवेति । "आत्मतः आविर्भावतिरोभावौ,आविर्भावतिरोभावाः स्वपदे तिष्ठन्ति" "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावौ जन्म-नाशविकल्पवत्"इति श्रुतिविष्णुपुराणादिवाक्यात् । नह्यत्र मन्त्रानु-क्रमेण निरूपणम्, तथासति कृष्णादाकाशमित्युक्त्वा स्वाहाया वायुं न वदेत्, मध्ये गोविन्दायेति पदप्राप्तेः । एवं स्वतन्त्रः कर्तेति न्यायान्मुख्यं कर्तृत्वं भगवत एव । इतरेषां तदधीनत्वेन तदनुग्रहै-कलभ्यत्वमेवान्यत्रायातीति निष्कर्षः । ब्रह्मणे मोहाभावाख्यस्य सुखस्य कर्तृत्वस्य च भगवतैव दत्तत्वात् ।

ननु भागवते तृतीये शितिकण्ठस्य सृष्टिकर्तृत्वेन निरूपणात्

## तदुत्तरात्स्त्रीपुंसादिभेदं सकलमिदं सकलमिदमिति ।

भाष्यम्

माह—तदुत्तरादिति । गोपीजनवल्लभपदात् । स्त्रीपुंसादिभेदं स्त्रीपुसादिभेदयुतं सकलमिदं पुरो दृश्यमानं प्रादुरकार्षमिति पूर्वेण सम्बन्धः । एवं सृष्टिक्रमं निरूप्य मोहाभावे दृष्टान्तं

पीयूषलहरी

कथं भगवत एव मुख्यं कर्तृत्वमितरेषां तदधीनत्वं चेति चेन्न, अनिष्टफलजनकत्वात् । तथाहि—ब्रह्मणा स्रष्टुं निर्दिष्टाः सनकादयो वासुदेवपरायणा मोक्षमार्गैकनिष्ठास्तं नाभ्यनन्दंस्तदा दुर्विषहं क्रोधं यावन्नियच्छति द्रुहिणस्तावताभ्रूवोर्मध्याद्रुद्रो जायत, तस्य रोदनाद्रुद्र इत्याख्यां सपोषणस्थानानि नामानि च वितीर्य प्रजाः सृजेत्याज्ञाप्य तत्सृष्टामनिष्टां च तां दृष्ट्वा शङ्काङ्कितोलमीदृशीभ्यः प्रजाभ्यो जगद्ग्रसन्तीभ्यो मामपि दहन्तीभ्यः इत्युक्त्वा प्रजासर्जनोपायमुपदिदेश । उपदेशस्त्वयम्—"तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् । तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् । तपसैव परं ज्योतिर्भगवन्तमधोक्षजम् । सर्वभूतगुहावासमञ्जसा विन्दते पुमान्"इत्यत्र वासुदेवं समाराध्य त्वं स्रक्ष्यसि, न तु स्वतन्त्रमिति स्पष्टमेव । तमुपदेशमनुरुध्य तपः कर्तुं वनं विवेश नीललोहितः । एतदेव स्वयं चतुर्थस्कन्धे रुद्रगीते वासुदेवस्य परत्वं स्वाराध्यत्वं मुक्तिदत्वं सर्वकर्तृत्वं च तत्सङ्गिसङ्गतः स्वर्गापवर्गादिकस्य तुच्छत्वं निरूप्य "इदमाह पुरास्माकं भगवान् विश्वसृक्पतिः । भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् । ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः । अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः"इत्यादिवाक्यैर्ब्रह्मोपदेशं स्मारयँस्तपश्चरणेन तदाज्ञयात्मनः कर्तृत्वं च समाख्याय वासुदेवपरायणानामचिराच्छ्रेयः स्वकृतस्तवस्य फलं च दर्शयञ्छितिकण्ठो विरराम । अन्यथा "पुरुषो

**एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं वेदयति। ॐकारान्तरालिकं मनुमावर्त्तयेत् । सङ्गरहितोभ्यानयेत् ।**

भाष्यम्

दर्शयति—एतस्यैवेति । अष्टादशार्णमन्त्रस्यैव यजनेन सेवनेन चन्द्रध्वजः कश्चित्क्षत्रियो गतमोहं मोहरहितमात्मानं स्वरूपं वेदयति जानाति । तस्यावश्यकत्वमाह—ॐकारान्तरालिकमिति । ॐकारविशिष्टं मनुमष्टादशार्णमन्त्रमावर्त्तयेदावृत्तिं कुर्यादित्यर्थः । तत्र मनोनिरोधस्यावश्यकत्वात्तत्प्रकारं निरूपयति—सङ्गरहित इति । निःसङ्गो

पीयूषलहरी

वै नारायणोऽकामयत । नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिः पृथिवी विश्वस्य धारिणी । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते । नारायणात्प्रजापतिः प्रजायते नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते" इति नारायणोपनिषदुक्तसर्वस्वतन्त्रकर्तृत्वस्य "बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय"इत्यादिगीतोक्तसकलशास्त्रार्थस्य च विप्लवापत्तेः । अत्र विशेषो मत्कृतनारायणोपनिषद्भाष्यादवगन्तव्यः ।

तत्र दृष्टान्तमाह—चन्द्रध्वज इति । चन्द्रध्वजः कश्चित् क्षत्रिय इति नारायणः । चन्द्रध्वजश्चन्द्रमौलिः शङ्कर इति विश्वेश्वरः । मोहरहितमिति । भगवद्भजनस्य मायानिवर्तकत्वात् ।

सङ्गरहितभजनस्य फलाविलम्बकरत्वात्तं निरूपयति । निःसङ्गो भूत्वेति । अत्र श्रीमदाचार्यचरणाः "सङ्गः सर्वा-

## तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयो—

भाष्यम्

भूत्वा भगवदेकपरोऽभ्यानयेत्परितो मनो ब्रह्मणि स्थापयेदिति । तस्यप्रयोजनमाह—तद्विष्णोरिति । वेदप्रसिद्धं देवाधिदेवस्य परमं सर्वोत्कृष्टं पदं स्थानं सदा निरन्तरं सूरयो विद्वाँसो भक्ता वा पश्यन्ति दृष्टिविषयं कुर्वन्ति नान्ये । परब्रह्मज्ञा-

पीयूषलहरी

त्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम्''इति पञ्चश्लोक्यां सर्वसङ्गविनिर्मुक्तत्वस्य सर्वथोत्कृष्टत्वमाज्ञाप्य सर्वथा त्यागाशक्तत्वे सत्सङ्गस्य कर्तव्यत्वं बोधयन्ति । अन्यथा वञ्चकानां कतिचिच्चिह्नानां सतोपि वैशिष्ट्यादापाततः साधुत्वाभ्युपगमे कृते च सङ्गे सन्मार्गपातावश्यंभावात् । सन्तः सर्वदा निरपेक्षाः पृष्ठलग्ना न भवन्ति, वञ्चकास्त्वननुयुक्ता अपि वाग्जाले विनिपातयन्तीति, विशेषजिज्ञासायां श्रीमद्धरिरायचरणविनिर्मितदुःसङ्गविज्ञानप्रकारनिरूपणादवगन्तव्यम् ।

ब्रह्मणि स्थापयेदिति । मनोनिरोधो हि सेवायां परमावश्यकः । "हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे । ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम्''इतिश्रीमदाचार्यचरणवाक्यात् । तल्लक्षणं तु प्रागुक्तमेव । प्रयोजनमिति । तत्र निरुद्धा एवाग्रे प्रतिपाद्यमानं पदं पश्यन्तीति तद्दर्शनापेक्षायां तस्य परमावश्यकत्वं द्योत्यते । स्थानमिति । ''अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम''इति गीतोक्तं स्थानमित्यर्थः । विद्वाँसो भक्ता वेति । "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इतिगीतावाक्यात् विद्वाँसो भगवत्स्वरूपज्ञा एव । भक्तानां विदुषां च मनोनिरोधस्यावश्यकत्वं दर्शयति—

दिवीव चक्षुराततम् । तस्मादेनं नित्यमावर्त्तयेन्नित्यमावर्त्तयेदिति । तदाहुरेके । यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलं तृतीयपदात्तेजश्चतुर्थपदाद्वायुश्चरमपदाद्व्योमेति ।

भाष्यम्

नेऽपि मनोनिरोधस्यावश्यकत्वात् । तमेव विशिनष्टि--दिवीवेति । दिवि स्वर्गे "यन्न दुःखेन सम्भिन्नम्" इति वाक्यात्त्रासमन्तात्ततं व्याप्तम् । तत्रस्थानामेव चक्षुः पश्यति नान्येषामिति निष्कर्षः । तस्मादिति यत एवं ततस्तत्प्राप्तय एनं मन्त्रं मनोनिरोधपूर्वकं नित्यमजस्रमावर्तयेदावृत्तिं कुर्यात् "आवृत्तिरसकृदुपदेशात्" इति वैयासन्यायात् । आवृत्तिरत्र तस्य परमावश्यकत्वद्योतनाय । तत्त्वोत्पत्तेरन्यप्रकारमाह--तदाहुरेक इति । एके वेदविदो यस्य मनोः प्रथमपदात् क्लीँकारात् भूमिः पृथिवी द्वितीयपदात् कृष्णायेति पदाज्जलं सलिलं तृतीयपदाद्गोविन्दायेत्याख्यात्तेजश्चतुर्थपदाद्गोपीजनवल्लभायेतिपदाद्वायुश्चरमपदात्स्वाहेति पञ्चमपदाद्व्योम

पीयूषलहरी

परब्रह्मेति । तत्पदस्वरूपं विवेचयन्प्रमाणमाह—यन्न दुःखेनेति । वाक्यं तु "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इति । तत्रस्थानामिति । लीलामध्यपातिभक्तानामेव । अत्र विशेषजिज्ञासुभिर्विद्वन्मण्डने सप्तसुवर्णसूत्रो लीलानित्यत्ववादो द्रष्टव्यः । अन्यप्रकारमिति । क्लीँकारात्पृथिव्यग्निचन्द्रसूर्यादयः प्राङ्निरूपितास्ततो भिन्नप्रकारमिति भावः । एक इत्यारभ्याहुरित्यन्तं

वैष्णवं पञ्च व्याहृतिमयं मन्त्रं कृष्णावभासकं कैवल्यस्य सृत्यै सततमावर्त्तयेत्सततमावर्त्तयेदिति।

भाष्यम्

आकाशः प्रादुर्भूत इत्याहुः। वैष्णवमिति विष्णोरयं वैष्णवस्तं विष्णुसम्बन्धिनं पञ्चव्याहृतिमयं पञ्चव्याहृतिविशिष्टं कृष्णावभासकं कृष्णप्राकट्यहेतुभूतं मन्त्रमष्टादशार्णं मनुं कैवल्यस्य केवलः कृष्णस्तस्य भावोऽनुक्रोशस्तस्यसृत्यै प्राप्त्यै सततं निरन्तरमावर्त्तयेदावृत्तिं कुर्यादिति पूर्वोक्तावृत्तिः पुनर्दृढीकृता स्थूणानिखननन्यायेन। तत्त्वोत्पत्तिप्रकारं गाथया

पीयूषलहरी

व्यक्तम्। प्राकट्यहेतुभूतं मन्त्रमिति। भक्तानां सर्वदोषनिवृत्तौ तद्दिदृक्षाया अत्युत्कटत्वे तत्पूरणार्थं "भक्तावत्यादरेणैव प्रकटो जायते हरिः"इति वाक्याद्धरिराविर्भवत्यतस्तद्भजनस्यैव प्राकट्यहेतुत्वम्। भजनीयस्य केवलपदवाच्यत्वं तत्कृपायाश्च कैवल्यपदोपादेयत्वमाह—केवलः कृष्ण इति। "साक्षी चेता केवलो निर्गुणश्च"इति श्रुतेः। तस्येति। भक्त्या प्रादुर्भूतस्येत्यर्थः। अनुक्रोश इति। प्रादुर्भूय "आत्मानं च ततो दद्यात्सुखे का परिदेवना" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता"इति निगमाम्नातस्वात्मानन्ददानरूपा कृपैव कैवल्यम्। "सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभः" इति श्रीमदाचार्यचरणवाक्यात्। प्राप्त्या इति। स्वात्मानन्ददानरूपकृपाप्राप्त्यै। निरन्तरमिति। कदाचिदपि मध्ये विघ्नो न कार्यः।

ननु सूतसंहितायां यज्ञवैभवखण्डे सत्यसन्धमहाभक्तेत्यारभ्य महतासन्दर्भेण स्वस्य ब्रह्मादिदेवानां च संसारमोचकत्वाभावस्य "शिव एव हि जन्तूनां महासंसारवर्तिनाम्। संसारमोचकः साक्षात् सर्वज्ञः

पीयूषलहरी

साम्ब ईश्वरः'' इति वाक्येन शिवस्य संसारमोचकत्वतद्भजनावश्यकयोश्च विष्णुनैवोक्तत्वात्कथं कैवल्यप्रदत्वं कृष्णस्येति चेन्न, कैवल्यसंसारमुक्त्योर्भेदात् ।

तथाहि—तत्र शिवस्य संसारमोचकत्वमात्रकथनम्, तदपि तामसानां तामसत्वनिवृत्तिरूपमेव । तथा वचनान्यपि "सात्त्विको विष्णुः, राजसो ब्रह्मा, तामसो रुद्रः" इतियोगचूडामण्युपनिषच्छ्रुत्या तत्कल्पानुसारेण सत्त्वगुणाभिमानी विष्णोरेव । नतु "कृष्णो ब्रह्मैव शाश्वतम् ।" "हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः । स सर्वदो गुणद्रष्टा तं भजन्निर्गुणो भवेत्"इति श्रुतिभागवतप्रतिपादितस्य निर्गुणस्य श्रीकृष्णस्य । श्रीकृष्णचन्द्रस्तु गीतायां "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्"इतिद्वादशाध्याये स्वस्याचिरात्संसारोद्धारकत्वमुक्त्वा "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः" इत्यत्रैवकारेणान्यत्रमनोनिवेशव्यावृत्तिपूर्वकस्वस्मिन्नेव मनोनिरोधं प्रतिपादयाञ्चकार । अतस्तद्दृढाश्रयवतां स एवाचिरात्संसारमोचको नैर्गुण्यापादकश्च । किञ्च नहि संसृतिनिवृत्तिमात्रेण कैवल्योपलम्भः । तस्या अहं ममत्वनिवृत्तावेव पर्यवसानात् । सा च कैवल्यपतेः श्रीकृष्णस्य "मुक्तोपसृप्यव्यपदेशात्"इति तत्त्वसूत्राद्भक्तिमार्गाधिकारसम्पादिकैव । तत्सम्पत्त्यनन्तरं भजनस्य व्यसनत्वसिद्धावुत्कटे च विरहे कृपया परिप्लुतः प्रभुः प्रादुर्भूय, स्वात्मानन्दं ददात्यतः कैवल्यसंसारमुक्त्योर्महान्भेदः । स च "भक्तिः सिद्धेर्गरीयसी" "मुक्तिं ददाति कर्हिचित्स्म न भक्ति योगम् ।" "न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः" इत्याद्यनेकप्रमाणसिद्ध एव । किञ्च "वासुदेवे मनो युञ्जन सर्वसिद्धिमवाप्नुयात् " " चिन्तनं वासुदेवस्य परस्य परमा-

पीयूषलहरी

त्मनः । स्वरूपव्याप्तरूपस्य ध्यानं कैवल्यसिद्धिदम् ।" "चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः"इत्यादि योगशिखात्रिशिखब्राह्मणगोपालतापिन्याद्युपनिषत्सु "नमो किञ्चनवित्ताय निवृत्तगुणवृत्तये । आत्मारामाय शान्ताय कैवल्यपतये नमः" इति प्रथमस्याष्टमे कैवल्यपतित्वम् । "ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसङ्गः । कैवल्यसम्मतपथस्त्वथभक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात्"इति द्वितीयस्य तृतीये तद्भक्तियोगस्य कैवल्यसम्मतपथत्वम् । "मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा । निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् । प्राप्नोतीहाञ्जसा धीरः स्वदृशाच्छिन्नसंशयः । यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे । परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः । शांतिं मे समवस्थानं ब्रह्मकैवल्यमश्नुते"इति तृतीयवाक्यैस्तत्प्राप्यत्वम् । "सत्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता । नमः कैवल्यनाथाय निर्वाणसुखसंविदे" इत्याद्यष्टमादिवाक्यैर्भागवते कैवल्यनाथत्वादिकञ्च श्रीकृष्णस्य व्यक्तमुक्तमेवेति कैवल्यसम्पत्सम्प्राप्तिस्तु तत्समनियतैव । अन्यथा सकलामरवृन्दावनकर्तारम्मुचुकुन्दं वरप्रदानावसरे सर्वेऽपि देवाः "वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ।" इति कैवल्येतरवरप्रदायकत्वं कथं वदेयुः । हरिवंशेऽपि भविष्य एकोननवतितमे ब्रह्मविदां ब्राह्मणानाञ्च कर्तव्योपदेशे कृष्ण एव सेव्यत्वेन मोक्षादिसर्वेष्टदातृत्वेनोपदिष्टः स्वयं शितिकण्ठेन ।

तदित्थम्—"एष वो मोक्षदाता च एष मार्ग उदाहृतः । एष पुण्यप्रदः साक्षादेतद्वः कर्मणः फलम् । एतदेव प्रशंसंति विद्वांसो ब्रह्मवादिनः । एष त्रयी गतिर्विप्राः प्राप्या ब्रह्मविदां सदा । एतदेव प्रशंसंति साङ्ख्ययोगसमाश्रिताः । एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः । एवमेव विजानीत नात्र कार्या विचारणा । हरिरेकः

तत्र गाथाः । यस्य चाद्यपदाद्भूमिर्द्वितीयात्सलिलोद्भवः । तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः । पञ्चमादम्बरोत्पत्तिस्तमेवैकं समभ्यसेत्—चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम् । ततो विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । यत्तत्पदं पञ्चपदं तदेव स वासुदेवो नयतोऽन्यदस्ति ।

भाष्यम्

पुनः स्मारयति तत्रेति । यस्येति गाथाशयः स्फुटः । तस्याः प्राकृतत्वमाह—तत इति । तस्मात्कारणाद्विशुद्धं विक्षेपाज्ञानादिरहितं विमलं स्वच्छं विशोकं शोकरहितम् । अशेषेति । निःशेषलोभक्रोधदम्भेर्ष्यादिसङ्गरहितम् । अप्राकृतगुणवत्वात् । यत्तत्पदं पूर्वोक्तं वेदादिप्रसिद्धं पदम् । पञ्चपदमष्टादशार्णमन्त्रस्वरूपं तदेव तन्मन्त्रात्मकं स्वरूपम् । वेदप्रसिद्धो वासुदेवः वसुदेवे शुद्धसत्वात्मके प्रादुर्भूतो नान्य

पीयूषलहरी

सदा ध्येयो भवद्भिः सत्त्वमास्थितैः । नान्यो जगति देवोऽस्ति विष्णोर्नारायणात्परः । ओमित्येवं सदा विप्राः पठत ध्यात केशवम् । ततो निःश्रेयसप्राप्तिर्भविष्यति न संशयः । एवं ध्यातो हरिः साक्षात् प्रसन्नो वो भविष्यति । भवनाशमयं देवः करिष्यति दृढं हरिः । सदा ध्यात हरिं विप्रा यदीच्छा प्राप्तुमच्युतम्"इति किं विशेषविवेचनेन सूक्ष्मेक्षिकया निरीक्षितं शास्त्रमेवाधिकारिणां शङ्कापङ्कं क्षालयतीति दिक् ।

प्रकृतमनुसरामः, निरन्तरमावर्तयेदित्यारभ्य वसुदेवइत्यन्तं भाष्यमुत्तानार्थम् ।

शुद्धसत्त्वात्मक इति "सत्त्वं विशुद्धं वसुदेवशब्दितम्" इतिवाक्यात् ।

तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावन-सुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या स्तोषयामि । ॐनमो—

भाष्यम्

इत्यर्थः । तं पूर्वप्रतिपादितं गोविन्दं वासुदेवमेकं समाधिक-रहितं सच्चिदानन्दविग्रहं सच्चिदानन्दस्वरूपं पञ्चपदं मनुप्र-तिपाद्यस्वरूपम् । वृन्दावनेति पूर्ववत् । समरुद्गणोऽहमिति । मरुद्गणैः सहितोऽहं ब्रह्मा परमयोत्कृष्टया स्तुत्या स्तवनेन स्तोषयामि प्रीणयामीत्यर्थः । मरुद्गणोहमिति पाठे तु मरुतां प्राणानां गणः समूहरूपः समष्टिप्राणवानित्यर्थः । शेषं पूर्ववत् । स्तुतिमाह—ॐ इति । प्रणवस्वरूपः प्रकर्षेण नवः प्रणव इति

पीयूषलहरी

समाधिकरहितमिति । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः । सच्चिदानन्दस्वरूपमिति । "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरुवे बुद्धिसाक्षिणे" इतिश्रुतेः । मरुद्गणैः सहि-तोऽहमिति । ऊनपञ्चाशद्भिर्मरुद्गणैः सहित इत्यर्थः । अयं पाठो नारा-यणसङ्गृहीतः । मुद्रितपाठं लक्षयति—मरुद्गणोहमिति पाठेत्विति । समष्टिप्राणवानिति । "यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् । आकाशाद्घोषवान् प्राणो मनसा स्पर्शरूपिणा । छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः" इतिभागवतैकादशस्कन्धीयैकविंशाध्यायवाक्यात् ।

स्तुतिमिति । पूर्वोक्तप्रणवस्वरूपस्येत्यर्थः । कृष्णस्य प्रणवस्वरूपत्वं "ईशस्त्वं सर्वदेवानामीश्वरोऽसि ततो हरे । प्रणवः सर्ववेदानां गायत्री छन्दसां प्रभो" इति हरिवंशीयभविष्येऽष्टाधिकाशीतितमेऽध्याये शिव-कृतविष्णुस्तुतिवाक्यात् । प्रणवस्य व्युत्पत्तिमाह—प्रकर्षेणेति । तत्र

विश्वस्वरूपाय विश्वस्थित्यन्तहेतवे ।

भाष्यम्

व्युत्पत्त्या सर्वदाऽनेकभक्तानां तत्तन्मनोरथपूर्त्यै नवस्वरूपः "यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय" इतिवाक्यात्तस्मै नमो नमस्करोमीत्यर्थः । एवं "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीतावाक्यनिर्दिष्टं परब्रह्मरूपं प्रणम्य, विराजं नमस्करोति विश्वरूपायेति विराड्रूपाय । नम इति सर्वत्रानुषज्यते । "पूर्णमदः पूर्णमिदम्" इति श्रुत्या तस्यैव तत्स्वरूपत्वम् । तत्रोपपत्तिमाह—विश्वेति विश्वस्य जगतः स्थितिः पालनमुत्पत्तिराविर्भावः । अन्तस्तिरोभावस्तस्य हेतवे कारणरूपाय "यतो वा इमानि

पीयूषलहरी

प्रमाणमाह—यद्यदिति । एवं स्तुत्यादौ प्रणवस्वरूपं भगवन्तं प्रणम्य तस्य विश्वस्वरूपं प्रणमति—विश्वेति । विराड्रूपायेति । विश्वरूपेण गीतायां विराजः प्रसिद्धेः । तत्सर्वमप्येकस्यैव पूर्णस्य स्वरूपमित्याशयेन तत्र श्रुतिं प्रमाणयति—पूर्णमिति । श्रुत्यर्थस्तु पूर्वमेव निरूपितः । एवं पूर्णमद इति श्रुत्युक्तक्रमेण पुरुषोत्तमं विश्वरूपं च निरूप्य पूर्णात्पूर्णमदच्यत इति श्रुतिभागं निरूपयति—विश्वस्येति । कारणरूपायेति । अभिन्ननिमित्तोपादानकारणरूपायेति भावः । तत्र प्रमाणत्वेन श्रुतिं लक्षयति—यतो वेति । नच "न तत्र रथा न रथयोगा रथपन्थानो भवन्त्यथ" इतिश्रुत्या विश्वस्य मिथ्यात्वेन निरूपणात् कथं ब्रह्मोपादानकत्वम्, तत्त्वे च वस्तुद्वयापत्तिः, यतो वेति श्रुत्यापि पञ्चम्या निमित्तकारणत्वस्यैवाभिहितत्वेन तदेव तद्भवतु नोपादानमपीति शङ्कयम् । तत्र स्वप्नस्यैव निरूपणात् । अस्य तु सुवर्णवन्निरूपणात् । उपादान-

भाष्यम्

भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म विजिज्ञासस्व'' इतिश्रुतेः।तस्य सर्वनियामकत्वमाह –

पीयूषलहरी

स्यापि कथनाच्च। तथाहि भगवान् बादरायणश्चतुर्लक्षण्यां साधनाध्यायस्य प्रथमेऽधिकारियोग्यदेहं निर्माय द्वितीये जीवस्य मुक्तियोग्यत्वं निरूपयति, तत्र प्रथमं स्वप्ननिरूपणम्। ननु जीवस्य मुक्तियोग्यतानिरूपणावसरे स्वप्ननिरूपणं किं प्रयोजनकमिति चेन्न। तस्य सत्यत्वे तद्गुणदोषसंश्लेषस्य जीवेऽवश्यं भाव्यत्वात्तत्त्वे च निरूपितापि शुद्धिर्विफला स्यादतस्तस्य मिथ्यात्वप्रतिपादनायाधिकरणारम्भः, तत्र पूर्वं "सन्ध्ये सृष्टिराह हि'' इतिसूत्रे "न तत्र रथा न रथयोगा" इतिश्रुतिं विषयीकृत्य स्वप्नसृष्टिर्निर्दिष्टा। ततस्तत्संश्लेषे प्राप्ते "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्'' इतिसूत्रेण तस्यालीकत्वमाह। सूत्रार्थस्तु स्वप्नसृष्टिर्मायामात्रम् कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्, कृत्स्नत्वेन यस्य यादृशं देशकालवस्तुसापेक्ष्यं तथाभिव्यक्तिः कार्त्स्न्येनाभिव्यक्तिस्तदभावात्। एवं स्वप्नस्यैव मिथ्यात्वख्यापनात्तदेव मिथ्या न त्विदं विश्वम्। अस्य तु "सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः।" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्याद्यनेकश्रुतिभिः, सत्यत्वं ब्रह्मोपादानकत्वं चोद्घोष्यते। न च तस्य सत्यत्वे द्वैतापत्तिः। "यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु।" "उभयव्यपदेशात्त्वहिकुण्डलवत्'' इत्याद्यनेकप्रमाणसमाहितत्वात्। "उपादानं प्रपञ्चस्य ब्रह्मणोन्यन्न विद्यते" इति श्रुतेश्चेति दिक्।

नियामकायेति। "सर्वस्य वशी सर्वस्येशानः एतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावाभूमी विधृते तिष्ठते" इत्यादि श्रुतिभ्यः। "ईशस्त्वं सर्वभूतानामीश्वरोसि ततो हरे" इति हरिवंशीयभविष्येष्टाशीत्यध्याये

विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः । नमो विज्ञानरूपाय—

भाष्यम्

विश्वेश्वरायेति। त्रिविधस्य जगतो नियामकाय सर्वरूपत्वं निरूपयति विश्वायेति । त्रिविधजगद्रूपाय । "सर्वं खल्विदं ब्रह्म" "स सर्वं भवति" "स वै सर्वमिदं जगत्" इत्यादिवेदवाक्यात्। गोविन्दाय कृष्णाय नमोनमः भूयो नमस्करोमीत्यर्थः। सर्वेषां तदधीनत्वाद्विश्वस्य च भगवदीयत्वान्नमनमेव कर्तुं शक्यं नाधिकमितिसिद्धान्तः। विज्ञानरूपायेति । विशिष्टं ज्ञानं विज्ञानं तद्रूपाय "विज्ञानं ब्रह्म" इतिश्रुतेः। विज्ञानरूपत्वमुपपाद्यान-

पीयूषलहरी

शिवकृतविष्णुस्तुतिवाक्याच्च । त्रिविधजगद्रूपायेति । त्रिविधत्वं तु जडजीवान्तर्यामिभेदेन । "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" "स वै सर्वमिदं जगत्" "नमस्ते विश्वरूपाय रसाय च नमो नमः। विश्वाय विश्वरूपाय विश्वकर्त्रे नमो नमः।" इति श्रुतिर्हरिवंशीयभविष्यनवतितमाध्यायशिवकृतविष्णुस्तुतिवाक्यात् । अन्यत्सुगमम् । सर्वस्य तदधीनत्वमाह—तदधीनत्वादिति । "श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः । पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिः" इति शुकवाक्यात्तस्य सर्वपतित्वेन सर्वस्य च तदंशोद्भूतत्वेन सहजदासत्वात्तदधीनत्वम् । नाधिकमिति । "किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय । लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति" इति वाक्यात् । इति सिद्धान्त इति । "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे। नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे" इतिपूर्वोक्तोपनिषत्सिद्धान्त इत्यर्थः। तस्य विज्ञानरूपत्वमाह—विशिष्टं ज्ञानमिति । विज्ञानं हि "एतदेव हि विज्ञानं न तथैकेन

परमानन्दरूपिणे । कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः। नमः कमलनेत्राय नमः कमलमालिने। नमः कमलनाभाय कमलापतये नमः । बर्हापीडाभिरामाय

भाष्यम्

न्दस्वरूपत्वमाह—परमानन्दरूपिण इति । परमश्चासावानन्दश्च स एव रूपमस्येति तस्मै नम इति पूर्वेण सम्बन्धः । "आनन्दमयोऽभ्यासात्" "अरूपवदेव हि तत्प्रधानत्वात्"इति व्याससूत्रात्। कृष्णाय "कृषिर्भूवाचकः शब्दः" इति श्रुत्या परब्रह्मस्वरूपिणे गोपीनाथाय गोपीनां घोषसीमन्तिनीनां नाथः सकलमनोरथपूरकस्तस्मै गोविन्दाय गवामिन्द्राय नमो नमो नमस्कारान् कुर्मः। कमलनेत्रायेति । स्फुटम्। बर्हापीडाभिरामाय बर्हो मयूरपिच्छस्तस्यापीडो मुकुटस्तेनाभिरामः सुन्दरस्तस्मै। रामाय बलभद्ररूपायाथवा रमन्ते योगिनो

पीयूषलहरी

येन यत्। स्थित्युत्पत्त्याप्ययान् पश्येद्भावानां त्रिगुणात्मनाम्। आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात्। पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत्"इति भागवतैकादशस्कन्धे लक्षितम् । निरवद्यानन्दरूपत्वमाह–परमश्चासाविति । परमानन्दस्वरूपः । आनन्दमात्रकरपादमुखोदरादित्वात् । बर्ह इति । "बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनकपिशं वैजयन्तीं च मालाम्। रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः" इति दशमवाक्यात्। बलभद्ररूपायेति । तस्यावेशरूपत्वात्।

अत्र कश्चित् बलभद्रस्य शेषरूपत्वेन तस्य शिवभूषणतया जन्मसिद्धं शिवदास्यमित्याह, तन्न रुचिरम्। सजातीयत्वमात्रेण भूषणत्वासम्भवात्।

रामायाकुण्ठमेधसे । रमामानसहंसाय गोविन्दाय नमो नमः । कंसवंशविनाशाय—

भाष्यम्

यस्मिन्तस्मै । अकुण्ठमेधसे । अकुण्ठा बुद्धिर्जीवानां यस्मात्तस्मै । रमामानसहंसाय रमा लक्ष्मीस्तस्या यन्मानसरूपं सरस्तस्य हंसाय । यथा हंसो निसर्गतया नीरक्षीरविवेकनिपुणस्तथाऽयमपि सकामनिष्कामभजनपरीक्षणनिपुण इति तस्य निरुपधिभक्तिलभ्यत्वबोधनाय हंसायेति विशेषणम् । गोविन्दायेति स्फुटम् । कंसवंशविनाशाय कंसाख्योऽसुर-

पीयूषलहरी

शेषस्य भगवतः पर्यङ्करूपत्वाच्च । तथापि हठात् तथा ग्रहणे "यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे शर्वादयो भ्रममिदं द्वितयं विसृज्य । सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिरादुपैति" इति षष्ठस्कन्धीयपञ्चदशाध्यायनिरूपितबलभद्रभक्त्या शिवस्य द्वैतभ्रमनिवृत्तेर्वैयर्थ्यापत्तेः । किञ्च "भवानीनाथः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति" "ॐनमो भगवते महापुरुषाय सर्वगुणसङ्ख्यानायानन्तायाव्यक्ताय नम इति ।" "भजे भजन्यारणपादपङ्कजं भगस्य कृत्स्नस्य परं परायणम् । भक्तेष्वलम्भावितभूतभावनं भवापहं त्वां भवभावमीश्वरम्" इत्यादिपञ्चमस्कन्धीयशिवस्य शेषाराधकत्वविप्लवप्रसङ्गाच्च ।

प्रकृतमनुसरामः । द्वितीयमर्थमाहाथवेति । रामपदं व्युत्पादयति—रमन्त इति । "रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते" इति रामपूर्वतापिनीयश्रुतेः । अकुण्ठा बुद्धिरिति । "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि

## केशिचाणूरघातिने । वृषभध्वजवन्द्याय—

भाष्यम्

स्तस्य भक्ताऽवनाय वंशोऽन्वयस्तस्य विनाशकृत्तस्मै । केशिचाणूरघातिन इति स्फुटार्थम् । वृषभध्वजवन्द्यायेति । वृषभो ध्वजे यस्य स वृषभध्वजः शिवस्तस्य वन्द्यो नमनीयस्तस्य वैष्णवत्वात्तस्मै ।

पीयूषलहरी

बुद्धियोगं तं येन मामुपयान्ति ते" इति गीतावाक्यात् । अन्यत्स्फुटम् । तस्य वैष्णवत्वादिति । "वैष्णवानां यथा शम्भुः"इतिभागवतवाक्यात् ।

अत्र कश्चित् "शिवेन विष्णुना चैव ब्रह्मणा वज्रिणा तथा । देवताभिधृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना । यत्कृतं भस्मनिष्ठेन श्रीमहादेवपूजनम् । तत्सर्वाभीष्टदं तस्मात्कर्तव्यं भस्मधारणम् । उद्धूलनत्रिपुण्ड्राभ्यामलङ्कृत्य तनुं शिवम् । योऽर्चयिष्यति तत्तुल्यो भुवि को वा भविष्यति" इतिसूतसंहितायाम् । तथैवाह विशिष्ठः—न तद्ध्यानं न तज्ज्ञानं न तद्दानं जपो न सः । त्रिपुण्ड्रेन विना येन विप्रेण यदनुष्ठितम्" इति । कात्यायनोऽपि "श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः" इति । भविष्ये च "सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् । तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत्" इति । भारतेऽपि "आयुष्कामोऽथवा राजन् भूतिकामोऽथवा नरः । नित्यं वै धारयेद्भस्म मोक्षकामी च वै द्विज" इति । विष्णुधर्मोत्तरे "भस्म वै परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् । येन दृष्टेन पापानि नाशमायान्ति सर्वथा" इति । तैत्तिरीयश्रुतौ "भूत्यै न प्रमदितव्यम्"इति तद्भाष्ये "सत्याद्धर्माच्च कुशलाद्भस्मनोद्धूलनादपि । त्रिपुण्ड्रधारणाच्चैव सदा न प्रच्युतो भवेत्" इति । तत्रैव च "विना भस्मत्रिपुण्ड्रेन विना रुद्राक्षधारणम् । पूजितोऽपि महादेवो न तस्य फलदो

पीयूषलहरी

भवेत्" इत्यादिशास्त्रवचोभिः प्रश्नस्य शिवभक्त्यङ्गत्वेन भस्मधारकत्वस्य निरूपणात् । भारतेऽपि द्रोणपर्वणि द्विदशैतैकाधिकाध्याये "योऽसौ नारायणो देवः पूर्वेषामपि पूर्वजः । अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत्" "स तपस्तीव्रमातस्थे शिशिरं गिरिमाश्रितः । षष्ठिवर्ष-सहस्राणि वायुभक्षोम्बुजेक्षणः । ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् । रुद्रमीशानमृषभं हरं शम्भुं कपर्दिनम् । पद्माक्षस्तं विरूपाक्ष-मभितुष्टाव भक्तिमान् । तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक् । अर्हते देवमुख्याय प्रायच्छदृषिसंस्तुतः ।" भगवानुवाचशिवः "मत्प्र-सादान्मनुष्येषु देवगन्धर्वयोनिषु । अप्रमेयबलात्मा त्वं नारायण भविष्यसि"इत्यादिवाक्यैः कृष्णार्जुनाभ्यां लिङ्गार्चनतो द्रौणिना तयो-राधिक्यस्य शिवभक्तत्वस्य च व्यक्तमावेदितत्वात् । किञ्च लिङ्गपुरा-णेऽपि "पुत्रार्थं भगवांस्तत्र तपस्तप्तुं जगाम च"इत्यारभ्य "दिव्याः पाशु-पताः सर्वे तस्थुः संवृत्य सर्वतः" इत्यन्तेन सन्दर्भेणोपमन्योराश्रमं गत्वा तं त्रिःपरिक्रम्य तस्माद्भस्मोद्धूलनं गृहीत्वा पाशुपतं च ज्ञानं प्राप्यैकवर्षं तपस्तप्त्वा शिवं च दृष्ट्वा ततः साम्बं पुत्रमवाप कृष्णः इत्य-ष्टाधिकशताध्याये निरूपणात् । तत्रैव च "लोकनाथ परानन्द नित्यं मे वर्तते मतिः"इत्यारभ्य "तथा भवाम्यहं विष्णो तव देव जनार्दन" इत्युत्तरार्धे पञ्चमेऽम्बरीषवरप्रदानप्रसङ्गेऽम्बरीषवाक्यात् कृष्णस्य शिव-भक्तत्वम् । भारतीयानुशासनिकपर्वचतुर्दशाध्याये द्वाविंशश्लोकादारभ्य "न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः । भवतां कीर्तयिष्यामि व्रतेशाय यथातथम्"इत्यन्तं महादेवकर्मगतेर्ब्रह्मेन्द्रदेवमहर्षिभिरगम्यत्वं निरूप्य तद्भवस्यादित्यादि सूक्ष्मदर्शिभिरज्ञेयत्वमुक्त्वा सतां गतिः सा मया नरमात्रेण कथं ज्ञातुं शक्येत्युक्त्वा तथापि तस्य कांश्चिद्गुणान् कथयिष्यामीति प्रतिज्ञायोपस्पृश्य शुचिर्भूत्वा वासुदेव उवाच "यद-

पीयूषलहरी

वासं च मे पूर्वं साम्ब हेतोः सुदुष्करम्"इत्युपक्रम्य "पुत्रार्थिनीमामुपेत्य"इत्यारभ्य "सपत्नीकाद्यदुश्रेष्ठ सत्यमेतद्ब्रवीमि ते" इत्यन्तं यथा पशुभर्तारमाराध्य त्वया पुत्रा उत्पादितास्तथैव मां प्रयच्छेति जाम्बवतीप्रार्थनया हिमवद्गमनमुपमन्योर्दर्शनं महेशानतपः करणादवश्यं पुत्रप्राप्तिर्भविष्यतीत्युपमन्योरनुज्ञा ततः शोडषाष्टवरान् पाप्स्यसीति तस्याशीरिति सकलं श्रुत्वा "द्रक्ष्ये दितिजसङ्घानां मर्दनं त्रिदशेश्वरम्"इत्यारभ्य "दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधिः" इत्यन्तमष्टदिवसपर्यन्तं तत्कथां श्रुत्वा भस्मरुद्राक्षधारणादिविधिश्रवणपूर्वकं षडक्षरमहामन्त्रदीक्षागृहीतेत्युक्त्वा ततः प्रभृति कृष्णस्य शिवभक्तत्वं "ब्रह्मा विष्णुरनन्तश्च शक्रोऽग्निर्वरुणो यमः। भूतिस्नानेन सम्पन्नाः सर्वेषामुपरि स्थिताः"इति वाक्यात् "तस्मा एतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्"इति श्वेताश्वतरोपनिषच्छ्रुतेश्च। शिरोव्रतं भस्मोद्धूलनमिति भाष्यात्। किञ्च "अद्य जिगमिषुस्त्वासं पुरीं वाराणसीं शुभाम्"इत्यारभ्य "कर्मनिर्मूलनक्षमाम्"इत्यन्तं ध्रुवं प्रति भगवता विश्वेश्वरस्थितिकारणभूतवाराणसीजिगमिषामुक्त्वा "वैकुण्ठनगरात्काशीम्" इत्याभ्य "अद्य यात्रास्ति महती कार्तिक्यां बहुपुण्यदा"इत्यन्तं स्वस्याजस्रं विश्वेश्वरार्चकत्वं तस्य च शक्तिसुदर्शनादिप्रदत्वं काशीखण्डे एकविंशाध्याये निरूपितमेव। हरिवंशे कैलासयात्रायामपि "एष गच्छामि पुत्रार्थम्" इत्यारभ्य "स च मे दास्यते पुत्रम्" इत्यन्तम् त्रिसप्ततितमेऽध्याये शङ्करभक्तत्वस्यैव कथनात्। कूर्मेऽपि "नार्जुनेन समः शम्भोर्भक्तो भूतो भविष्यति। मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम्" इति। एवमेव महाशिवपुराणेऽपि "कदाचित्पर्वते रम्ये" इत्यारभ्य यदा रैवतकं गत्वोपमन्युं स्वेष्टप्राप्तिमार्गं हरिः पप्रच्छ, तदोपदिष्टशिवभजनो मन्त्रमाराधनविधिं च प्राप्य सहस्रनामभिः, प्रत्येकं कमलं बिल्वपत्रं च

पीयूषलहरी

समर्पयन्नासक्तमासमाराधयाञ्चकार। तत्र कमलेऽभ्य एकं हृतमभूत्तदा स्वनेत्रमुत्पाट्य समुदाहरत्। तावता सहसा शितिकण्ठः प्रकटो बभूव। हरिणा च दैत्यैर्विश्वं पीड्यत इत्यावेदितस्तस्मै चक्रं प्रादात्। तेन च वट्टुकपर्वते पूजितोऽनेकान् वरान्ददाविति महता सन्दर्भेण निरूपितत्वात्। पूर्वोक्तसूतसंहितावचनाच्च। तथैव च ब्रह्मगीतायामस्तीति सर्वत्र कृष्णस्य शिवभक्तत्वेन तत्प्रसादात्प्राप्तोदयत्वस्य निरूपणान्नेशानस्य वैष्णवत्वमित्याह।

तन्न मञ्जुलम्। तद्वाक्यानां भिन्नविषयकत्वात्। तथाहि—शिवेन विष्णुना चैवेति सन्दर्भे कृष्णपदानुपलम्भेन न तत्सिद्धिः। वसिष्ठकात्यायनवाक्य अपि कल्पित एव, तत्स्मृत्योस्तदनुपलम्भात्। भविष्यवाक्यमन्यानि चैतादृशवाक्यानि शैवपराण्येव, अन्यथा "यागो दानं जपो होमः स्वाध्यायः पितृतर्पणम्। भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्। बृहद्वामनपुराणे "भगवच्चरणाम्भोजकुङ्कुमस्य सुलेपनात्। सर्वधर्मविहीनानां पुलिन्दीनां विना श्रमम्। श्रीकृष्णप्राप्तिरेवाभूज्जहुराधिं मनोभवाम्। तस्मात्सर्वप्रयत्नेन कुङ्कुमेन सुगन्धिना। पुण्ड्राणि रचयेद्धीमाँल्ललाटादिषु वै क्रमात्। ऊर्ध्वपुण्ड्रं कौङ्कुमं तु यः कुर्याद्भक्तितो नरः। स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। दत्तानि सर्वदानानि तस्य तुष्टो हरिः स्वयम्" इति। पाद्मे "ऊर्ध्वपुण्ड्रभृजुं शोणं दण्डाकारं सुशोभनम्। कौङ्कुमं यस्य भाले तु स वै भागवतोत्तमः" इति। बृहन्मनौ "उत्सवे वासुदेवस्य भुक्तशेषं सुकुङ्कुमम्। अरुणं तेन कुर्याद्यो दण्डाकारोर्ध्वपुण्ड्रकम्। तस्योपरि प्रसन्नः स्यात्साक्षाद्देवकीनन्दनः। अरुणं कुङ्कुमं पुण्ड्रं यस्य भाले न दृश्यते। सर्वधर्मयुतो वापि विष्णुद्रोही स उच्यते" इति। भविष्ये "हारिद्रेणारुणेनैव कृष्णभुक्तेन पुण्ड्रकम्। कृत्वा कर्मसु कुर्वीत तच्चानन्त्याय कल्पते" इति। पराशरसंहितायाम्। आदाय वैष्णवक्षेत्रान्मृत्तिकां

पीयूषलहरी

विमलां सिताम्। मूलमन्त्रेणाभिमन्त्र्य ऊर्ध्वपुण्ड्राणि धारयेत्। ललाटादिषु चाङ्गेषु केशवादिन् यथाक्रमम्''इति। मोक्षधर्मे "विष्णुगात्राच्युतं चूर्णं हारिद्रं धारयन्ति ये। अपोह्य पातकान्याशु मोदन्ते दिवि देववत्''इति। विष्णुधर्मोत्तरे "अभिषिक्तं हरेर्बिम्बे हरिद्राचूर्णमुत्तमम्। शिरसा धारयेद्यस्तु सोऽश्वमेधफलं लभेत्" इति। महाभारते "विष्णुरूपेण संस्पृष्टं यच्चूर्णं शिरसा वहेत्। तस्याशुभानि नश्यन्ति मोक्षभागी भवेन्नरः" इति। ब्रह्माण्डपुराणे—"अरुणं रजनीचूर्णं मत्पर्वादिषु मद्धृतम्। तेनोर्ध्वपुण्ड्रं कुर्वन्ति तेषां वै नास्ति पातकम्। कौङ्कुमं चोर्ध्वपुण्ड्रं वै दृष्ट्वा निन्दां करोति यः। बौद्ध एव स विज्ञेयः सद्धर्मनिरतोऽपि च। नाहं प्रसन्नः सकलागमेषु शीलेषु नो कर्मकरेषु कञ्जसु। नो ब्रह्मचर्यादिधरेषु यद्वन्मत्कुङ्कुमेनाश्चितविग्रहे यथा" इति। तथैव ऋग्वेदे ऋभुदैवसूक्ते दशमी ऋक् "श्रोणामेकमुदकं गामवाजति मांसमेकः पिंशति नयाभृतः आनिम्लुचः शकृदेको अपा भरत्किस्वित्पुत्रेभ्यः पितरावुपावतुः''इति। अस्या अर्थस्तु हेऋभवः भवतां मध्य एकः श्रोणामारक्तां भगवदुपभुक्तकुंकुमादिरूपां मुख्यकर्मभूतां प्रति उदकं जलं गौणं कर्म अवाजति अवगमयति, अन्तर्भावितण्यर्थोयम्, एवञ्च श्रोणामारक्तवर्णां कुङ्कुमादिरूपामुदकेन मिश्रयतीत्यर्थः। सूनया हिंसया आभृतमाहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि। उदकेनेति शेषः। गोरोचनमन्यत्सुगन्धिद्रव्यस्याप्युपलक्षणम्। आनिम्लुचः नितरामस्तं गच्छतो दग्धेन्धनस्याग्निसम्बन्धेन शकृच्छुष्कगोमयोत्थं भस्मेति यावत्। जाबालादिश्रुतिप्रतिपादितं शैवपरमथवा "स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना''इति वाक्यप्रतिपादितमग्निहोत्राद्यङ्गं वा अग्निहोत्रकर्ता अपाहरत् आहृतवान्। अत्राप्युदकेनेति शेषः। व्यहिताश्चेति छन्दसि। व्यवहितेनाप्युपसर्गेण क्रियासम्बन्धः। "हृग्रहोर्भश्छन्दसि''इति हस्य भः। एतानि मन्त्रपदान्यसम्पूणार्थत्वा-

पीयूषलहरी

त्स्वात्मलाभाय ब्राह्मणमपेक्षन्ते "इषेत्वोर्जेत्वा" इत्यादि मन्त्रवत् । तत्र यथा इषेत्वेति शाखामाच्छिनत्ति, ऊर्जेत्वेत्यनुमार्ष्टीति ब्राह्मणानुशासनात् । हे शाखे त्वां इष आच्छिन्दन्नित्यादि व्याख्यातम् । एवमिहापि वासुदेवोपनिषद्ब्राह्मणपुराणोपबृंहणानुसारादूर्ध्वपुण्ड्रार्थमारक्तां मृदं चन्दनादिरूपां जलेनाभिश्रयेदिति व्याख्येयम् । अत्र शिष्टाचारं प्रमाणयन्ति—किंस्वित्पुत्रेभ्यः पितरावुपावतुरिति । पुत्रहितार्थं यत्किञ्चिद्व्रतं पितरौ मातापितरौ वा पितृपितामहौ वा, पितराविति पदं शिष्टानामुपलक्षकम् । "यद्यदाचरति श्रेष्ठः" इति वाक्यात् । उपेत्य स्वीकृत्य अवतु सम्यक परिपालयामासतु । तदेवं तस्य पुत्रस्य श्रेयःसाधनमित्यर्थः । एवं श्रीमत्पुरुषोत्तमचरणैरियं श्रुतिरूर्ध्वपुण्ड्रवाद उपन्यस्ता । भारतटीकायाञ्च नीलकण्ठचतुर्धरेणाप्यूर्ध्वपुण्ड्रपरकत्वेनैव व्याख्याता । एवं सकलनिगमागमोदितस्योर्ध्वपुण्ड्रधारणस्य वैयर्थ्यापत्तेः । अत्रैतदिङ्मात्रमुक्तम् । विस्तरतो यथा तथोपपादयिष्यामो वासुदेवोपनिषद्भाष्ये ।

नच शिवभक्त्याङ्गत्वेन कृष्णेन तद्धारणमिति शङ्क्यम् । कृष्णस्य परात्परत्वस्य प्रागेव सुनिरूपितत्वात् । नच तथापि तत्र तत्र श्रूयमाणं तदुपासनं वरादिग्रहणञ्च कथमुपपद्यत इत्यपि शङ्क्यम् । तथाविधलीलायाः स्वदत्तवरसाफल्यपरकत्वात् । तथाहि वाराहे रुद्रगीतायां "त्वं च रुद्रमहाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ।" तत्रैव च विष्णुरुवाच "सर्वज्ञस्त्वं न सन्देहो ज्ञानराशिः सनातनः । देवानां च परः पूज्यो भविष्यसि न संशयः । एवमुक्तः पुनर्वाक्यमुवाचोमापतिर्मुदा । अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु । मूर्तौ भूत्वा भवानेव मामाराधय केशव । मां वहस्व च देवेश वरं मत्तोगृहाण च । येनाहं देवदेवेश पूज्यात्पूज्यतरो भवे । विष्णुरुवाच "देवकार्याव-

तारेषु मनुष्यत्वमुपागतः । त्वामेवाराधयिष्यामि त्वञ्च मे वरदो भव । यत्त्वयोक्तं वहस्वेति देवदेव उमापते । सोऽहं वहामि त्वां देव मेघो भूत्वा शतं समाः" इति । पद्मपुराणेऽपि "त्वामाराध्य तथा शम्भो ग्रहिष्यामि वरं सदा । द्वापरादौ युगे भूत्वा कलया मानुषादिषु । स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु । मां च गोपय येनस्यात्सृष्टिरेषोत्तरोत्तरा"इति । अत्रैतज्ज्ञेयम्, सर्वेषां निष्कामतया निर्गुणपरब्रह्मभक्तत्वसिद्धौ तल्लोकप्राप्त्या लय एवस्यान्न जातु सर्गः । तल्लीलायाश्च नियतसमय एव कर्तव्यत्वेनोत्तरोत्तरं सृष्टिप्रवृत्त्यर्थं "त्वं च मे वरदो भव"इत्यादिभगवदाज्ञयैव तथा करणं शिवस्य सङ्गच्छते । "अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु" इत्यादिवाक्यैः स्वस्य पूज्यत्वसिद्धये शिवयाचितं "देवकार्यावतारेषु मनुष्यत्वमुपागतः" इति वाराहवाक्यात् "द्वापरादौ युगे भूत्वा कलया मानुषादिषु"इति पाद्मवाक्याच्च स्वकलामात्रेण प्रादुर्भूय मानुष्यं ख्यापयंस्तस्मै दत्तवरसाफल्याय तथा लीलाकरणम् । न तु पूर्णस्वरूपेण । शिवस्यापि "अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु"इतिवाक्ये सर्वजन्तुषु प्रसिद्धं यथास्यात्तथा मूर्तौ मामाराधयेत्यन्वयात्सर्वत्र व्यामोहकरणाय तथा प्रसिद्धकरण एव तात्पर्यपर्यवसानात् । व्यामोहश्च फलम् । तेनोत्तरोत्तरासृष्टिप्रवृत्तिः । व्यामोहोऽप्यसुराणामेव न तु भगवदीयानाम् । अन्यथा "अहं मानुषयोनिस्थः साम्प्रतं मुनिपुङ्गवाः । तस्मान्मानुषवद्वीर्यं मम जानीत सुव्रताः ।" इति वचसा ख्यापितेऽपि मानुष्ये "अयुक्तमस्मानेवं त्वं वाचा वरद भाषितुम् । त्वच्छासनमुखाः सर्वे त्वदधीनपरिश्रमाः ।" इत्युक्त्वा त्वदन्यो दिवि भुवि च न पश्यामोऽतोस्मत्सम्भावनं त्वयि नोचितमिति भारतीयानुशासनिकचतुरधिकद्विशताध्याये ऋषीणां वाक्यवैयर्थ्यापत्तेः । तत्र ख्यापितेऽपि ब्रह्मत्वे सर्वज्ञत्वाद्भगवतस्तैर्वक्ष्यमाणविषयस्याश्चर्यभूतत्वकथनस्य तत्कृतशुश्रुषायास्तेषां दर्शनेन स्वसाफल्यवचनस्य च विरोधापत्तेः । नारदसुदामप्रभृतिस्वभक्तपूजाकरणादपि

पीयूषलहरी

पूर्णत्वभङ्गापत्तेश्च । ननु लीलायाः किं प्रयोजनम्, लोके हि लीलास्वानन्दफलावलोक्यते । न ह्याप्तकामस्याविर्भूतनित्यानन्दस्वरूपस्यानन्दापेक्षास्ति । नहि स आनन्दोन्यूनो यतोऽधिकार्थं सा स्यात्प्रलये न्यूनानन्दप्रसङ्गश्चेति चेन्न, "लोकवत्तु लीलाकैवल्यम्"इति सूत्र एव भगवता बादरायणेन समाहितत्वात् । तत्र "न प्रयोजनवत्वात्"इति सूत्रेण न ब्रह्म जगत्कारणम् । कुतः ? प्रयोजनवत्वात् । कार्यं हि प्रयोजनवद्दृष्टं लोके । ब्रह्मणि पुनः प्रयोजनवत्वं न सम्भावयितुमपि शक्यम् । "आप्तकामः" श्रुतिविरोधादिति पूर्वपक्षे समादधते लोकवदित्यादिः । तु शब्दः पूर्वपक्षं व्यावर्तयति । लोकवदेव हि लीला न हि लीलायां किञ्चित्प्रयोजनमस्ति । लीलाया एव प्रयोजनत्वात् । यथा लोके राजभिर्मृगयादिः क्रियते तत्र नामेध्याद्याहरणमन्यद्वा प्रयोजनम् । भृत्यादिभिरपि तत्सम्भवाभावात् । न हि राज्यसुखात्तत्सुखं विशिष्टमतस्तत्प्रवृत्तिरुपपद्येत । एवमिहापि प्रयोजनमन्तरा ब्रह्मापि क्रीडतीति वेदे शास्त्रादौ च तथैव निरूपणान्न पर्यनुयोगावकाशः । ईश्वरत्वादेव न लीलानुयोक्तुं शक्या । सैव कैवल्यम् । नन्वेवं भवतु, तथापि, मनुष्यत्वमनौपचारिकञ्च भगवत्वमिति द्वयोस्तेजस्तिमिरयोरिव परस्परं विरुद्धयोः कथं सामानाधिकरण्यम् । "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः"इतिवाक्यान्मानुष्ये दुःखाघातादीनामवश्यं भाव्यत्वात्तेषां मर्त्यत्व एवोपपन्नत्वाद्भगवत्वस्य च तद्विरुद्धत्वादितिचेन्न, "निर्दोषश्चेत्कथं विष्णुर्मनुष्येषु प्रजायते । चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम् । एवं मे संशयो ब्रह्मन् हृदि शल्यमिवार्पितः" इति नारदप्रश्ने "स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यासुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि

पीयूषलहरी

त्यक्तदेहस्य देहवत्। लोकानां दर्शयामास स्वरूपे सदृशाकृतिम्" इति ब्रह्माण्डवाक्यैर्मनुष्यत्वेऽपि पुरुषोत्तमत्वस्य सर्वदा वर्तमानत्वात्। अत एव भगवता "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन"इतिगीतायां स्वजन्मकर्मणोर्दिव्यत्वं स्वमुखेनैव निरूपितम्। जन्मनस्तदेवदिव्यत्वं यत्तावन्मात्रमायां दूरीकृत्य स्वप्रकटीभावः। नतु निषेकादिना लोकवज्जननम्। "स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते" इतिपूर्वोक्तब्रह्माण्डवाक्यात्। कर्मणश्च तदेव दिव्यत्वं यदन्यस्य माहात्म्यं ख्यापयन् स्वस्य च "तथाप्यासुरमोहार्थं परेषां च" इतिपूर्वोक्तब्रह्माण्डवाक्यान्मोक्षस्य दौर्लभ्यादासुरव्यामोहाय मानुष्यं प्रकटयन् वरादींश्च गृह्णन्नपि पूर्ण एव। अन्यथा "न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि"इति गीतावाक्यविरोधापत्तेः। ब्राह्मेपि "अन्यदेवेषु या भक्तिः पुरुषस्येह जायते। कर्मणा मनसा वाचा तद्गतेनान्तरात्मना। तेन तस्य भवेद्भक्तिर्यजने मुनिसत्तमाः। स करोति ततो विप्रा भक्तिं चाग्नेः समाहितः। तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे। पूजां करोति सततमादित्यस्य ततो द्विजाः। प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः। सेवां करोति विधिवत् स तु शम्भोः प्रयत्नतः। तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे। सम्पूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम्। ततो भुक्तिं च मुक्तिं च स प्राप्नोति द्विजोत्तमाः" इति। समाप्तिदशायां मायानुकीर्तनाध्याये क्रममुक्तावपि सर्वेषां केशवादेवामृतलाभस्योपदिष्टत्वात्। अतः स्वतन्त्रत्वादाप्तकामत्वात् सर्वेषां मोक्षप्रदत्वान्न कस्यापि भक्तत्वं कृष्णस्य, अपि तु सर्वेपि तद्भक्ता एवेति सकलशास्त्रसिद्धान्तः।

प्रकृतमनुसरामः, भारतवाक्योट्टङ्कनमपि मुधा। तत्र पर्वादिस्थानस्यानिर्दिष्टत्वात्। विष्णुधर्मोत्तरवाक्यमपि शैवपरमेव। न तेन तद्धारणं कृष्णे सम्भवति। तैत्तिरीयश्रुतितद्भाष्याभ्यामपि नाभीष्ट-

पीयूषलहरी

सिद्धिः । भूतिपदस्याभ्युदयार्थकत्वग्रहणेन सुनिर्वाहात् । "योऽसौ नारायणो देवः" इत्यारभ्य ताभ्यां लिङ्गेऽर्चितो देव इत्यन्तैर्वाक्यैः कृष्णस्य शिवभक्तत्वसाधनप्रयासोप्यकिञ्चित्कर एव । तथाहि "योऽसौ नारायणो देवः पूर्वेषामपि पूर्वजः" इत्यस्याग्रे "आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः । आद्यः सर्वस्य लोकस्यानादिनिधनोच्युतः । व्याकुर्वते तस्य तत्त्वं श्रुतयो मुनयश्च ह । अतोजय्यत्सर्वभूतैर्मनसापि जगत्पतिः । तस्मादिमं जेतुकामो अज्ञानतमसावृतः । मा शुचः पुरुषव्याघ्र विद्धि तद्वदिहार्जुनम् । तस्य शक्तिरसौ पार्थस्तस्माच्छोकमिमं त्यज । विश्वेश्वरोऽयं लोकादिः परमात्मा ह्यधोक्षजः । सहस्रसंहितादंशादेकांशोऽयमजायत । देवानां हितकामार्थं लोकानां चैव सत्तम" इतिमहत्सन्दर्भानन्तरं "अजायत च कार्यार्थे पुत्रो धर्मस्य विश्वकृत्" इत्यस्ति । अत्र तावत् "एको ह वै नारायण आसीन्न ब्रह्मानेशानः" इति महोपनिषच्छ्रुतिप्रतिपादितं तत्त्वम् । पूर्वेषामपि पूर्वज इत्युक्त्वोद्भाव्य "एकमेवाद्वितीयं ब्रह्म" "आत्मैवेदमग्र आसीत्पुरुषविधः" "अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपापैः" इत्यादिश्रुत्युक्तं सर्वादित्वमादिपदेनानूद्य "भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा सन्निविष्टः" इति श्रुत्युक्तं च देवत्वं च देवपदेनाख्याय, न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । सकारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति श्रुतिप्रतिपादितं जगत्पतित्वं जगन्नाथपदेनाज्ञाप्य " यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशंति, तद्ब्रह्म विजिज्ञासस्व" इति श्रुतिनिरूपितं निरङ्कुशजगत्कर्तृत्वादिविशिष्टं पूर्णब्रह्मलक्षणं लोककर्तेति पदेन निगद्य स्वयं प्रभुरित्युक्त्या तस्यानौपचारिकं प्रभुत्वमनूद्याग्रिमावलोकनेन कस्यचिद्विप्रतिपत्तिः स्यात्तन्निवृत्तये स्थूणानिखननन्यायेनाद्यः सर्वस्य लोकस्येत्यादिना पूर्वोक्तं मुहुर्दृढीकृत्यानादि-

पीयूषलहरी

निधनत्वादिगुणानुक्त्वा श्रुतिमुनिप्रतिपादितत्वं तस्याह—व्याकुर्वत इति। श्रुतयो वेदस्तुत्यादौ, मुनयः शास्त्रादौ, तस्य परब्रह्मणः कृष्णस्य तत्त्वं प्रतिपादयन्तीति। ननु भवत्वेवं तथापि तस्याजय्यत्वं तु शिवप्रसादलभ्यमेवैतत्कथायां व्यक्तम्। तेन तद्भक्तत्वमपीति शङ्कानिरासायाह—अतोजय्यत्सर्वभूतैर्मनसापि जगत्पतिः" इति "यतोऽयं पूर्वेषामपि पूर्वजः, आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः" इत्यादि परब्रह्मलक्षणकोऽतएवाजय्यः। एनं जेतुकामो मूर्ख एवेति कथनादजय्यत्वे परब्रह्मत्वमेव हेतुः। अन्यथा शिवप्रसादस्याग्रे वक्ष्यमाणत्वात् पूर्णत्वविधायकान् गुणान् व्याख्याय अत इति हेतुं मध्ये दत्त्वा अजय्यत्वं न वदेत्। ये चात्र पुरुषोत्तमनिरूपका गुणा भगवता बादरायणेन प्रोक्तास्त एव चाग्रे शिवेन स्वमुखादपि निरूपिताः। अग्रे च व्यासेन "लोकयात्राविधानार्थं दानवानां वधाय च। धर्मसंस्थापनार्थाय सञ्जायेति युगे युगे"इति न्यरूपि। तेन "अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु। मूर्तौ भूत्वा भवानेव मामाराधय केशव। मां वहस्व च देवेश वरं मत्तो गृहाण च"इति पूर्वप्रतिपादितं शिवयाचितं देवकार्यावतारेषु मनुष्यत्वमुपागतः। त्वामेवाराधयिष्यामि त्वं च मे वरदो भव" इति वाक्येन वरत्वेन भगवता दत्तममोघयितुमेवैत्तत्सर्वमिति नास्ति कश्चिच्छङ्कावकाशः। एतेन लिङ्गपुराणीयवाक्यान्यपि दत्तोत्तराणि। तेषामपि लोकयात्राविधायकत्वात्। अन्यथा "स्वेच्छयाऽवतीर्णोऽपि वासुदेवः सनातनः। मानुष्यन्निदयन्नेव देह शुद्धिं चकार सः" इति वाक्यात्तस्य सनातनत्वस्वेच्छावतीर्णत्वादिगुणानुक्त्वा देहशुद्धिं कथं वदेत्। शुद्धया च कायकर्मजमलनाशस्याप्युक्तत्वात्। भगवति तस्यासंस्पर्शस्य प्रागेव निरूपितत्वाच्च। तथात्वानादरे तस्य सनातनत्वस्वेच्छावतीर्णत्वादीनां देहशुद्ध्याद्युक्तीनां च परस्परं विरोधापत्तेः। तथैवाम्बरीषप्रसङ्गवचनानि। भारतीयानुशासनिकपर्वस्थवासुदेववचनोट्टङ्कनमपि न रुचिरम्। तथाहि नेयं कथा

पीयूषलहरी

तत्र चतुर्दशाध्याये द्वाविंशश्लोकात्, किन्तु पञ्चचत्वारिंशाध्याये षष्ठश्लोकादारभ्य वर्तते। तत्र हिरण्यगर्भादिदेवानां तस्य गत्यनभिज्ञत्वमुक्त्वा स्वस्य ब्रह्मभावसङ्गोपनानन्तरं नरमात्रेणेति कथनाद्ब्रह्मादिदेवेभ्यो नरमात्रत्वस्य न्यूनत्वात्तं पुरस्कृत्यैव तथोक्तेः। अन्यथा "सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि" इति युधिष्ठिरवाक्यासङ्गतेः। तत्रैव "यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत। ब्रह्मणश्चापि सम्भूतः शिव इत्यवधार्यताम्। शिवात्स्कन्दः सम्बभूव एतत्सृष्टिचतुष्टयम्। दैत्यदानवदर्पघ्नमेवं मां विद्धि नित्यशः।" इत्यादीनि चत्वारिंशाध्याये बदरीनारायणवाक्यानि विरुध्येरन्। एवं सर्वत्र तस्य सर्वोत्कृष्टत्वे निरूपितेऽपि न तथा सर्वैर्ज्ञायते। यतस्तज्ज्ञानप्रकारोऽपि तत्रैव "मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम्।" इति निरूपित एव। "आराध्य पशुभर्तारं रुक्मिण्यां जनिताः सुताः। तथा ममापि तनयं प्रयच्छ मधुसूदन" इति जाम्बवतीवाक्येन हिमवन्तं गत्वा तपश्चरणादिविधायकवाक्यभ्रमनिराकरणमपि तत्रत्योपमन्युवचसैव सुकरम्। तथाहि "स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः। पूज्योऽपि पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि। मनुष्यतानुवृत्त्या त्वां ज्ञात्वा तिष्ठामि सर्वगम्" इतिभगवद्दर्शनेन स्वतपःसाफल्यं वदन्नुपमन्युः पूज्योऽपि पूजयसि सर्वैर्द्रष्टव्योऽपि द्रष्टुमिच्छसीति सर्वं मानुष्यानुवृत्त्यैव, नतु ब्रह्मवृत्त्या, वयं तु त्वां सर्वगं सर्वव्यापिनं ब्रह्मेति यावत्तं ज्ञात्वा तिष्ठामः स्थितिं कुर्मः। इत्युक्त्वा तस्य परब्रह्मत्वं प्रकटीचकार। "तस्मा एतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इतिश्वेताश्वतरश्रुत्या भस्मोद्धूलनगृहणप्ययुक्तमेव। तत्र शिरोव्रतकथनाभावात्, मुण्डके प्रतिपादनाच्च। तत्रापि शिरोव्रतं न भस्मोद्धूलनात्मकम्। शिरस्यङ्गारधारणरूपस्य मुण्डकाध्ययनाङ्गभूतस्य व्रतस्याभिप्रेतत्वेनोद्धूलनस्याशक्यवचनत्वात्। ननु सौरसंहिताप्रोक्तं पाशुपतव्रतमेव शिरोव्रतपदेनोच्यते

पीयूषलहरी

"इदं शिरोव्रतं चीर्णं विधिवद्वैर्द्विजातिभिः। तेषामेव परां विद्यां वदेदज्ञानबाधिकाम्।" शिरोव्रतं नाम शिरस्यथर्वणश्रुतेर्यदुक्तं तद्भिन्नैवान्यत्पाशुपतसंहितमित्याद्युक्त्वा "अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना। सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम्" इति। ब्रह्माण्डेऽपि उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये। आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थितम्" इति पूर्वोक्तव्रते तु शिरोव्रतमध्यापकप्रसिद्धम्। तत्प्रसिद्ध्यपेक्षया पुराणस्य बलिष्ठत्वे नेदमेव शिरोव्रतत्वेन ग्राह्यमिति चेन्न। पूर्ववाक्ये समः समानाह्वयो यस्येति समासादुद्धूलनस्य शिरोव्रतसमान नामकत्वबोधनात्। द्वितीयवाक्ये पूर्ववत्तस्यैवाथर्वशिरस्थितत्वकथनेन शिरःसम्बन्धिव्रतं शिरोव्रतमिति योगबोधनात् "रूढिर्योगमपहरति" इत्यतोस्यानुपबृंहणत्वानुसन्धानेन पुरः स्फूर्तिकं तद्विरोधमनादृत्यैव व्यासचरणैः "स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च" इति सूत्र अध्यापकप्रसिद्धस्य समाचारग्रन्थोक्तस्यैव शिरोव्रतस्यादरात्। अन्यथा "स्मृतेश्च" इत्यादि सूत्रप्रणयने पुराणमुपजीवतः पुराणप्रणेतुस्तदादरानुपपत्तेः। तत्सूत्रव्याख्याने सर्वैरेव भाष्यकारैर्वेदव्रतविशेषरूपस्य तस्यादृतत्वानुपपत्तेश्च। अत एवाध्यापकप्रसिद्धिनैर्बल्यमपि निवारितम्। अन्यथाऽन्धपरम्परापत्त्या तदाचारविप्लवप्रसङ्गात्। "ब्रह्मविद्यापदेन पञ्चाक्षरीग्रहणमप्यरम्यम्। तथाहि "ब्रह्मा देवानां प्रथमं सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता, स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इत्युपक्रम्य मुण्डकोपनिषद्रूपब्रह्मविद्यापाठेन तस्यामेव तस्य रूढत्वनिश्चयात्। किञ्चोपसंहारेऽपि तत्पदएताभिरिति प्रकृतपरामर्षिपदनैकट्येन तथैव निरूपणात्। नचैवं सति "विद्याकामस्तु गिरिशं दाम्पत्यार्थमुमां सतीम्।" "अपि मय्यनवद्यात्मा" "दुर्भगाया न मे धाता" "तां वै प्रवयसो बालाम्" "नमस्ये त्वाम्बिके" इत्यादिवाक्यैर्द्वारकेशपतिप्राप्तये रुक्मिण्या सोम-

पीयूषलहरी

भजनं कृतमिति शङ्कयम्। "विद्याकामस्तु गिरिशम्" इति वाक्यस्य सकामोपासनविधायकत्वेन विभूतिपरकतया भगवदप्रापकत्वात्। तस्य तु "नायमात्माप्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" इति श्रुत्या वरणैकलभ्यत्वात्। तद्भक्तानां तु सकलमनोरथपरिपूर्त्यै "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" इति भागवतवाक्यात्स एव सदा सर्वफलप्रदो विराजते। अतः "अपि मय्यनवद्यात्मा" इत्यादीनि वाक्यानि लीलामानुषविग्रहाया-स्तस्या लोकाचारविधायकान्येव। अन्यथा तत्रैव "यस्याङ्घ्रिपङ्क-जरजः स्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोपहन्त्यै" इत्युक्त्वा भगवच्चरणरजःस्नपनमुमापतेः कथं वदेत्। कुरुक्षेत्रप्रसङ्गे च द्रौपद्य-नुयुक्ता स्ववरणविषये रुक्मिणी "चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः। निन्ये मृगेन्द्र इव भागमजावि-यूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय" इति वाक्येन सोमप्रसादल-ब्धत्वमनुक्त्वैवं कथं निरूपयेत्। नन्वेवं भवतु तथापि "ततस्तुष्टो महादेवो वृषारूढस्त्रिलोचनः" इत्यारभ्य देवीभागवतीयषष्ठस्कन्धान्तर्गता-ष्टादशाध्यायवाक्यैः शापादश्विनीरूपधारिण्या रमायाः शिवतपश्चरणा-देव कृष्णप्राप्तिरुक्ता तत्र का गतिरितिचेच्छृणु, तत्र हि "किं तपस्यसि कल्याणि जगन्मातर्वदस्वमे" इति शिववाक्येन तस्या मातृत्वकथनेन स्वत उत्कृष्टत्वं प्रतिपाद्य "नारायणस्तु सर्वेषां सेव्यो योग्यः सदैव हि। तं त्यक्त्वा देवदेवेशं किं मां ध्यायसि सिन्धुजे" इतिवाक्येन भगवतः सर्वसेव्यत्वोक्त्या परात्परत्वस्यैव साधितत्वात्। शापापनोदनस्यापि तत्र भगवतैवोक्तत्वाच्च। एतावदपि त्वदुक्तप्रमाणैर्नाभीष्टसिद्धिरिति व्यक्तीकर्तुमेव। वस्तुतस्तु हरिवल्लभसुधोदयाख्ये पुराणसमुच्चये पाद्मो-त्तरखण्डीयद्विचत्वारिंशाध्याये रुद्रोमासम्वादे "मात्स्यं कौर्मं तथा लैङ्गं

पीयूषलहरी

शैवं स्कान्दं तथैव च । आग्नेयं च षडेतानि तामसानि निबोध मे । वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शनम् । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै । ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोध मे" इति पुराणगणनागणितत्वेन व्यासानिरूपणात्प्राचीनप्रबन्धादिषु तद्वाक्यानुपलम्भादप्रामाण्यतया न तत्र किञ्चिदपि वचनार्हम् । काशीखण्डीयविंशाध्यायवाक्यैस्तत्साधनप्रयासोप्यरुचिरः । तस्य लोकयात्राविधायकत्वानादरे तत्रत्य सर्ववाक्यविप्लवापत्तेः, कथम् ? इत्थम्—तत्रैव भगवान् बादरायणः "नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । नमः सहस्रशिरसे पुरुषाय पराय च । सहस्रमूर्ते श्रीकान्त नमस्ते यज्ञपूरुष । वेदवेद्यस्वरूपाय नमो वेदप्रियाय च" इति सन्दर्भे "सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्"इति पुरुषसूक्तोक्तं ब्रह्मस्वरूपं "नमः सहस्रशिरसे" इत्यनेनोक्त्वा "महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतिप्रतिपादितमौपनिषदपुरुषस्वरूपं पुरुषायेति पदेनाख्याय "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" इतिश्रुतिनिरूपितं परस्वरूपं पराय चेति विशेषणेनोद्भाव्य "अनन्तमूर्ति तद्ब्रह्म" इत्युक्तम्, "सहस्रमूर्त"इति पदेनोक्त्वा लक्ष्मीपतित्वं तस्य प्रतिपाद्य"यज्ञो वै विष्णुः" इतिश्रुतिनिगदितं "यज्ञपूरुषः" इत्यनेन निरूप्य "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" इतिश्रुतिगीताभ्यां प्रकाशितम् । "वेदवेद्यस्वरूपाय" इत्युक्त्वा तस्य वेदवेद्यत्वं निरूपयाञ्चकार । किञ्च तत्रैव भगवद्विभूतिकीर्तनानुक्रमे "प्राणायामोसि सर्वेषु साधनेषु शुचिस्त्वहो सर्वदा सर्वलिङ्गेषु श्रीमान् विश्वेश्वरो भवान्" इति वाक्येन विश्वेश्वराख्यस्य शिवस्य तद्विभूतिरूपत्वमुक्त्वा "अहो पुंसां महामोहस्त्वहो पुंसां प्रमादता । वासुदेवमनादृत्य यदन्यत्र-

पीयूषलहरी

कृतश्रमाः । इदमेव हि माङ्गल्यमिदमेव धनार्जनम् । जीवितस्य फलं चैतद्यद्दामोदरकीर्तनम् । अधोक्षजात्परो धर्मो नार्थो नारायणात्परः । अभाग्यं परमं चैतद्वासुदेवं न यः स्मरेत्" इति महता प्रबन्धेन "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम्" इति गीतोक्तं परभावमजानतां महामोहवत्त्वं प्रमादवत्त्वं चोक्त्वा "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।" "तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः । नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः" इतिश्रुतिभगवताभ्यां निरुक्तं कृष्णसेवकानामेव जीवितसाफल्यम् "इदमेव हि माङ्गल्यमिदमेव धनार्जनम् । जीवितस्य फलम्"इत्यादिना ज्ञाप्य वासुदेवस्मरणविहीनानां "येऽन्येरविन्दाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदङ्घ्रयः"इति भागवतोक्तं "अभाग्यं परमं चैतद्वासुदेवं न यः स्मरेत्"इति वाक्येन भाग्यहीनत्वमुक्त्वा सुदृढीचकारेति सर्वं चतुरस्रम् । तथैव हरिवंशीयकैलासयात्राप्रसङ्गेनापि नाभीष्टसिद्धिः । तल्लीलाया घण्टाकर्णमोक्षपरकत्वमिति शङ्क्यम् । तथा सति मं शङ्करोऽपि मोचयितुमसमर्थस्तं स्वयं कथं मोचयेत् । तथा हीमानि घण्टाकर्णवाक्यानि "अहं कैलासनिलयमासाद्य वृषभध्वजम् । ततः प्रसन्नोमामाह वृणीष्वेति वरं हरः । ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ, मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः । मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः । तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम् । मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे" इति वाक्यैः शिवप्रेरितो घण्टाकर्णस्तत एव मुक्तिं लेभे । अतस्तपश्चरणादिकं व्याजमात्रमेव, तस्य कैवल्यपतित्वात्, आप्तकामत्वाच्च, अग्रे च भगवच्छङ्करसमागमे "भगवन्देवदेवेश चक्रपाणे जनार्दन । तपश्चर्याकिमर्थं ते प्रार्थना तव कापि भोः । स्वयं विष्णुर्भवान्नित्यं तपस्त्वं तपसां हरे । पुत्रार्थं यदि ते देव तपश्चर्या जना-

पार्थसारथये नमः । वेणुनादविनोदाय गोपालायाहिमर्दिने ।

भाष्यम्

पार्थसारथय इति । पृथापुत्रोऽर्जुनस्तस्य सख्येन कृपया यः सारथ्यं कृतवाँस्तस्मै । वेणुनादविनोदायेति । वेणोर्नादे विनोदोऽधिकानन्दो यस्य तस्मै । "वंशस्तु भगवान् रुद्रः" इति कृष्णोपनिषच्छ्रुत्या तस्य तद्रूपत्वम् । गोपालाय । एतदुपनिषत्प्रतिपाद्यगोपवेशाय । अहिमर्दिन इति । अहिः कालीयस्तस्य फणोपरिनर्तनेन मदभङ्गकारिणे ।

पीयूषलहरी

र्दन। पुत्रो दत्तो मया देव पूर्वमेव जगत्पते" इत्यादिवाक्यैः "न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन" इति गीतोक्तं स्मृत्वा देवदेवेश त्वं निवेद्य तपश्चरणाय कारणाभावं प्रकाश्य स्वकृतकृष्णस्तुतौ "रुद्राणामहमेवास" इत्युक्त्वा स्वस्यापि तद्विभूतिरूपत्वं समर्थयाञ्चकार नीललोहितः । अतस्तल्लीलाया घण्टाकर्णमोक्षपरकत्वे न कोपि चोद्यावसरः "नार्जुनेन समः शम्भोः" इत्यादि कौर्मवाक्यैरपि न किञ्चित् । यतस्तत्रैव "कलौ रुद्रो महादेवो लोकानामीश्वरः स्मृतः" इति वाक्यात्कलिधर्माक्रान्तानामेव तथात्वसिद्धये तथोक्तत्वेन तत्परत्वात् । नच "अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते" इति भारते अश्वत्थामानं प्रति शिववाक्याद्विरोध इति शङ्क्यम् । "त्वामाराध्य तथा शम्भो ग्रहिष्यामि वरं सदा" इति वरदानस्य यथावत्पदेनात्र व्यक्तमुद्बोधादित्यस्माभिर्यथा तथा प्राङ्निरूपितमेवेति सर्वमनवद्यम् ।

पृथापुत्र इत्यारभ्य पूर्ववदित्यन्तं व्यक्तम् । वेणोरुद्ररूपत्वे श्रुतिमाह—वंशस्त्विति । इयं श्रुतिः कृष्णोपनिषत्स्था ।

कालिन्दीकूललोलाय लोलकुण्डलधारिणे । वल्लवी-वदनाम्भोजमालिने नृत्यशालिने । नमः प्रणतपालाय श्रीकृष्णाय नमो नमः । नमः पापप्रणाशाय गोवर्द्धनधराय च ।

भाष्यम्

कालिन्दीकूललोलाय । कालिन्द्याः कूलं तीरं तत्र लोलाय विहारचपलाय । लोलकुण्डलधारिण इति स्फुटम् । वल्लवीति । वल्लव्यो गोपीजनस्तस्य मुखकमलैर्मालिने शोभायुताय तैः परिवेष्टितायेति यावत् । नृत्यशालिन इति व्यक्तम् । प्रणतपालायेति प्रणतान् शरणागतान्पालयति रक्षति तस्मै भक्तवत्सलायेत्यर्थः । श्रीकृष्णाय श्रिया लक्ष्म्या युक्तः कृष्णो वेदप्रतिपाद्यः परमकाष्ठापन्नस्तस्मै नमोनम इति पूर्ववत् । नमः पापप्रणाशायेति । पापमघं प्रकर्षेण नाशयत्युन्मूलयति तस्मै "न तथा ह्यघवान् राजन् पूयेत तप आदिभिः । यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया" इति भागवतवाक्यात् । गोवर्धनधरायचेति । गोवर्धनाख्यो यो गोधरस्तस्य पुरन्दरमदभङ्गकरणाय धराय धारिणे ।

पीयूषलहरी

भक्तवत्सलायेति "भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान्परिपालयति" इतित्रिपादविभूतिमहानारायणोपनिषच्छ्रुतेः । "सकृदेव प्रपन्नाय तवास्मीति च वादिने । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति वाल्मिकीययुद्धकाण्डे बिभीषणमुद्दिश्य सुग्रीवं प्रति रामवाक्यात् । "सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो दद्यादेतद्व्रतं हरेः" इति गारुडे विष्णुभक्त्यध्यायवाक्याच्च । शेषं विशदम् ।

पूतनाजीवितान्ताय तृणावर्तासुहारिणे । निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे । अद्वितीयाय महते श्रीकृष्णाय नमो नमः । प्रसीद परमानन्द प्रसीद परमेश्वर । आधिव्याधिभुजङ्गेन दष्टं मामुद्धर प्रभो ।

भाष्यम्

पूतनाजीवितान्तेति । पूतनाया उलूकिकाया यज्जीवितं तस्य पयःपानव्याजेनान्तकारकः-प्राणहारकस्तस्मै । तृणावर्तास्विति स्फुटम् । निष्कलाय निर्गता लौकिकाः कला यस्मात्स निष्कलस्तस्मै लौकिककलारहितायेत्याशयः । अन्यथा "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इतिश्रुतिबाधापत्तेः "षोडशकलोऽयं पुरुषः" इति श्रुतिविरोधाच्च । विमोहाय मोहरहिताय शुद्धाय मलविक्षेपायाज्ञानादिरहिताय । अशुद्धवैरिणे । अशुद्धा येऽघवन्तो दुष्टास्तेषां वैरिणे शत्रवे । अद्वितीयाय "एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेः । महते सर्वश्रेष्ठाय श्रीकृष्णाय श्रीकृष्णचन्द्राय नमो नम इतिपूर्ववत् । एवं स्तुत्वा तस्य कृपां प्रार्थयति—प्रसीदेति । परमानन्देति । हे देवाधिदेव प्रसीदेति पूर्ववत् । आधीति । मानसकायिकव्यथारूपसर्पेण दष्टं कृतदंशं मां प्रभो सर्वकरणसमर्थ समुद्धर त्वत्कृपाप्राप्तये विक्षेपादीनां बाधकत्वात्तानेव नाशयेत्यर्थः ।

पीयूषलहरी

पयःपानव्याजेनेति । "तस्मिंस्तनं दुर्जरवीर्यमुल्बणं घोराङ्कमादाय शिशोर्ददावथ । गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः समं रोषसम-

श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर। संसारसागरे

भाष्यम्

श्रीकृष्णेति उत्तानम्। रुक्मिणीकान्तेति यथा सकलप्रतिबन्धान् दूरीकृत्य रुक्मिण्या मनोरथाः पूरितास्तथा ममापि पूरयिष्यतीत्याशयेन रुक्मिणीकान्तेति सम्बोधनम्। गोपीजनमनोहरेति। गोपीजना राधाप्रमुखास्तेषां मनोहरो हृदयहारकस्तत्सम्बुद्धौ हे गोपीजनमनोहर। यथा तेषां तथा ममापि हरत्वित्याशयेन तथा वचनम्। संसारसागरेति। संसारः

पीयूषलहरी

न्वितोऽपिबत्"इति दशमे षष्ठाध्यायवाक्यात्। राधाप्रमुखा इति। राधादिर्गोपीजनः शक्तिरूपः। अत्र कश्चित्—राधिका खलु भगवतार्यचरितमवधीर्य कन्यात्व एव गृहीतेत्याह तन्न। यद्यपि "गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम्। योन्तश्चरति सोध्यक्षः क्रीडनेनेहदेहभाक्"इति श्लोके शुकेनैव समाहितत्वान्न कश्चिच्चोद्यावसरस्तथाप्येकां राधां पुरस्कृत्यैव तथोक्तत्वेनात्र समाधानं ब्रूमः। तथाहि ब्रह्मवैवर्ते कृष्णजन्मखण्डे "तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम्। हरिं संस्मृत्य हवनं चकार विधिना विधिः। उत्थाय शयनात्कृष्ण उवास वह्निसंनिधौ। ब्रह्मणोक्तेन विधिना चकार हवनं स्वयम्। कौतुकं कारयामास सप्तधा च प्रदक्षिणम्। पुनः प्रदक्षिणां राधां कारयित्वा हुताशनम्। प्रणमय्य ततः कृष्णं वासयामास तं विधिः। तस्याहस्तं श्रीकृष्णं ग्राहयामास तं विधिः। वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम्। संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित्। श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजापतिः। स्थापयामास मन्त्रांस्त्रिन्पाठयामास राधिकाम्। पारिजातप्रसूनानां माला जानुविलम्बिताम्। श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा। प्रणमय्य पुनः कृष्णं राधाञ्च कमलोद्भवः। राधागले हरिद्वारा

मग्नं मामुद्धर जगद्गुरो।

भाष्यम्

अहन्ताममतात्मकः स एव सागरस्तस्मिन्मग्नं प्लुतं मां जगद्गुरो उद्धर निष्कासय। गुरुपदस्य सर्वान्धकारनिरोधकत्वेन "तमेव भान्तमनुभाति सर्वम्" इति श्रुत्या तस्य जगद्गुरुत्वान्ममाप्य-

पीयूषलहरी

ददौ मालां मनोहराम्। पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः। तद्वामपार्श्वे राधाञ्च सस्मितां कृष्णचेतसाम्। पुटाञ्जलीन्कारयित्वा माधवं राधिकां विधिः। पाठयामास वेदोक्तान् पञ्चमन्त्रांश्च नारद। प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः। कन्यकाञ्च यथा तातो, भक्त्या तस्थौ हरेः पुरः। एतस्मिन्नन्तरे देवाः सानन्दपुलकोद्गमाः। दुन्दुभीर्वादयामासुश्चाणकं मुरजादिकम्। पारिजातः प्रसूनानां पुष्पवृष्टिर्बभूव ह। जगुर्गन्धर्वप्रवरा ननृतुश्चाप्सरोगणाः। तुष्टाव श्रीहरिं ब्रह्मा तमुवाच ह सस्मितः। युवयोश्चरणाम्भोजे भक्तिं मे देहि दक्षिणाम्। ब्रह्मणो वचनं श्रुत्वा तमुवाच हरिः स्वयम्। मदीयचरणाम्भोजे सुदृढा भक्तिरस्तु ते। स्वस्थानं गच्छ भद्रं ते भविता नात्र संशयः" इत्यादिपञ्चदशाध्याये 'ब्रह्मण एव विवाहकारयितृत्वस्य सुव्यक्तत्वेन शङ्कानुदयात्सर्वं शुभम्। जगद्गुरुत्वादिति त्रिविधस्यापि जगतोन्धकारनिवर्तकत्वात्। अत्र "यदि वस्तत्र विश्रम्भो दानवेन्द्रजगद्गुरौ" "क्षेमा स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ" इति वाक्याभ्यां जगुरुत्वं शिवसमनियतमेव नान्यगामीत्याह कश्चित्, तत्फल्गु। दशमोत्तरार्धे नवतितमेध्याये "याः पर्यचरन्प्रेम्णा पादसंवाहनादिभिः। जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः" पञ्चमे चतुर्विंशाध्याये यस्य भगवान्स्वयमखिलगुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते इत्याद्यनेकप्रमाणैः स्कान्दीयवैष्णवखण्डीयपुरुषोत्तमक्षेत्रमाहात्म्यवचनैरन्यैरपि पुराणैर्जग-

केशव क्लेश हरण नारायण जनार्दन । गोविन्द परमानन्द मां समुद्धर माधव । अथैवं स्तुतिभिराराधयामि ।

भाष्यम्

न्धकारमवश्यं नाशयिष्यतीत्यभिप्रायेण जगद्गुरो इति सम्बोधनम् । केशवेति । कश्च ईशश्च केशौ तयोर्वममृताख्यं सुखं यस्मात्स केशवस्तत्सम्बुद्धौ । हे शिवब्रह्मणोरप्यमृतत्वप्रदेत्यर्थः । क्लेशहरणेति सकलसन्तापशमनसमर्थः । नारायण आदिदेव जनार्दन जनामविद्यामर्दयतीति व्युत्पत्त्याऽविद्यानाशकः । गोविन्देति स्फुटम् । परमानन्द श्रुत्युक्तानन्दविग्रह माधव मा लक्ष्मीस्तस्या धवः पतिस्तत्सम्बुद्धौ हे लक्ष्मीपते मां समुद्धर सम्यक् प्रकारेण यथा पुनर्दोषा नोदयेरंस्तथा ।

एवं स्तुतिं समाप्य तान्बोधयत्यथैवमिति । अथेत्यानन्तर्यार्थः । अनेन प्रकारेण स्तुतिभिः प्रार्थनाभिराराधयामि । भगवन्त-

पीयूषलहरी

द्गुरुत्वस्य प्रतिपादिततत्वात् । एवं सत्यनौपचारिकं तत्रैव गुरुत्वम् अन्यथा स्वदत्तवरबलोद्धतं वृकासुरात्रस्तं शङ्करं भगवान्कथं मोचयेत् । अन्धकारमिति "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"इतिश्रुतेः तस्यैव सर्वप्रकाशकत्वात् । अवश्यमिति " अविश्वासो न कर्तव्यः सर्वथा बाधकस्तु सः " इति श्रीमद्वल्लभाचार्यचरणवाक्यात् । केशवपदं व्युत्पादयति कश्चेति अथवा क इति ब्रह्मणो नाम "ईशोऽहं सर्व देहिनाम्""आवां तवाङ्गसंभूतौ तेन केशवनामवान्"इति हरिवंशे भविष्येऽष्टाशीतितमेऽध्याये शिवकृतविष्णुस्तुतिवाक्यात् । अमृताख्यमिति " चतुर्मुखादीनां सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते इति त्रिपादविभूति

तथा यूयं पञ्चपदं जपन्तः । श्रीकृष्णं ध्यायन्तः संसृतिं तरिष्यथेति होवाच हैरण्यः । अमुं पञ्चपदमावर्त्तयेद्यः स यात्यनायासतः केवलं तत् । अनेजदेको मनसो जवीयो

भाष्यम्

मिति शेषः । तथेति यथाहमाराधयामि तथा यूयं भवन्तः पञ्चपदं गोपालमन्त्रं जपन्तस्स्मरन्तः श्रीकृष्णं कमलाकान्तं ध्यायन्तो ध्यानविषयं कुर्वन्तः संसृतिमहंताममतात्मकं संसारं तरिष्यथोत्तीर्णा भविष्यन्तीत्याशयः । संसारं तीर्त्वाऽपि भजनमेव कर्तव्यत्वेनाहामुमिति । पूर्वप्रतिपादितं पञ्चपदमष्टादशार्णमन्त्रं यो भक्त आवर्तयेदावृत्तिं कुर्यात्स अनायासतो विनाश्रमेण निष्कामभजनमार्गेण । केवलं तदिति । प्रकृतिगुणसम्बन्धरहितं वेदप्रतिपादितं भगवत्पदं याति गच्छति ।

एवं भक्तानां भगवद्धामगमनं निरूप्य भगवतो विरुद्धधर्माश्रयत्वमाह—अनेजदिति । कम्पनरहितः । एकोऽद्वितीयः । मनसोजवीयो मनोवेगमतिक्रम्य वेगवानित्यर्थः ।

पीयूषलहरी

महानारायणोपनिषच्छ्रुतेः । माधवपदं व्युत्पादयति मेति । अथवा "मा विद्याच हरेः प्रोक्ता तस्या ईशो यतो भवान्, तस्मान्माधवनामासि धवः स्वामीति शब्दितः" इति शिवकृतविष्णुस्तुतिवाक्यात्तथा । विनाश्रमेणेति । "भक्तियोगो निरुपद्रवो, भक्तियोगान्मुक्तिर्बुद्धिमतामनायासेनाचिरादेव तत्त्वज्ञानं भवति" इति त्रिपादविभूतिमहानारायणोपनिषच्छ्रुतेः। कम्पनरहित इति । "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इतिश्रुतेः सर्वेषामपि कम्पनः । मनोवेगमतिक्रम्येति । यो मनसि तिष्ठन्मनसोन्तरो

नैनद्देवा आप्नुवन्पूर्वमर्षदिति । तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजेत् । ॐ तत्सदित्युपनिषत् ॥

भाष्यम्

देवाः सुरा एनं श्रीकृष्णं नाप्नुयुर्न प्रापुवन्नित्यर्थः। तत्र हेतुमाह—पूर्वमिति । यतोऽयं तेषामपि पूर्वमग्रे गमनकर्ता । एवं तस्य विरुद्धधर्माश्रयत्वं समाख्याय पूर्वोक्तं सर्वं तात्पर्यरूपेण स्मारयन्नुपसंहरति—तस्मादिति । पूर्वोक्तसकलकारणात्कृष्णः सदानन्दः परः श्रेष्ठः सर्वोत्कृष्टो देवो दशविधलीलाविशिष्टस्तं कृष्णं ध्यायेत् । ध्यानविषयं कुर्यात् । तं रसेदिति । रसनाविषयं कुर्यात् कीर्तयेदित्यर्थः । तं भजेदिति । सेवेत स्वसेव्यतया स्थापयेदिति यावत् । एवं तत्पदप्राप्तावपि निरपेक्षत्वेन सेवैव कर्तव्या । भक्तानां सेवैव साधनं तदेव च फलमिति हैरण्यो ब्रह्मा मुनीनकथयदित्याशयः ।

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रचन्द्रिकाच्छिन्नस्वान्तध्वान्तेन श्रीमुरलीधरतनुजनुषा शुद्धाद्वैतकेसरिशुद्धाद्वैतभूषणशुद्धाद्वैतसहस्रांशुशुद्धाद्वैतवाचस्पतिवेदान्तसुधाकरवेदान्तविद्यालङ्कारेत्युपपदालङ्कृतगोस्वाम्यनिरुद्धाचार्येण विरचिते ब्रह्मामृतभाष्ये गोपालपूर्वतापिन्युपनिषत्सम्पूर्णा ॥

---

पीयूषलहरी

यं मनो न वेद यस्य मनः शरीरं योमनसोन्तरोयमयत्येष स आत्मा अन्तर्याम्यमृतः" इति श्रुतेर्मनसोपि नियामकत्वेन ततोपि जवीयस्त्वात् । न प्राप्नुवन्निति । "यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः, न यं विन्दन्ति तत्त्वेन तस्मै भगवते नमः" "विदाम न वयं सर्वे यन्मायां माययावृताः" इत्यादि भागवतवाक्यैस्तन्मायाज्ञानेप्यसामर्थ्यं सर्वेषां यत्र

पीयूषलहरी

तत्र तत्कृपाविरहे वश्यमायस्य ब्रह्मणः प्राप्तये कथं समर्थास्युरिति भावः । कीर्तयेदिति । उपलक्षणमिदम् । "श्रवणं कीर्तनं विष्णोः"इतिभागवतप्रतिपादितां नवविधां भक्तिं कुर्यात् । सेवैव साधनं सैवफलमिति । तनुवित्तजयोः साधनत्वं मानस्याः फलत्वमिति विवेकः । तेन च"एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव । मन्त्रोप्येकस्तस्य नामानि यानि कर्माप्येकं तस्य देवस्य सेवा"इतिपुरुषोत्तमक्षेत्रे श्रीमदाचार्यचरणानां शास्त्रार्थप्रसङ्गे श्रीमज्जगदीश्वरेण स्वहस्ताक्षरैर्दत्तो-निर्णय एव सकलवेदान्तसिद्धान्त इति फलितम् ।

स्वबालचपलालापश्रवणोत्सुकमानसाः ।
कृपयन्तु निजाचार्या मायावादतमोहराः ॥ १ ॥
केनापि न निरुद्धोहं निजाचार्यकृपाबलात् ।
यत्सत्यं भयराहित्याद्विवृतं स्फुरितं हृदि ॥ २ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रचन्द्रिकाच्छिन्नस्वान्तध्वान्तेन श्रीमुरलीधरतनुजनुषा शुद्धाद्वैतकेसरिशुद्धाद्वैतवाचस्पतिशुद्धाद्वैतभूषण-शुद्धाद्वैतसहस्रांशुवेदान्तसुधाकरवेदान्तविद्यालङ्कारेत्युपपदालङ्कृतेन गोस्वाम्यनिरुद्धाचार्येण निर्मिता पीयूषलहरी पूर्णतामाप ।



# ब्रह्मामृतभाष्ये पीयूषलहर्यां च प्रमाणत्वेनोपन्यस्तानां श्रुतिपुराणादिवाक्यानां सूचीपत्रम् ।


अ

अंशो नानाव्यपदेशात् ८
अकामः सर्वकामो वा ४०
अक्षण्वतां फलमिदं ६
अग्निरित्यादिमन्त्रैः १०१
अजायत च कर्मार्थम् ९८
अज्ञानतिमिरान्धस्य १४
अणोरणीयान् ६४
अथवा शून्यवद्गाढं ३०
अद्य जिगमिषुस्त्वासं ९१
अद्य यात्रास्ति महती ९१
अनन्तमूर्ति तद्ब्रह्म १०३
अनन्याश्चिन्तयन्तो माम् ७-८-१०-५४
अनाद्यनन्तं कलिलस्य मध्ये ९८
अनित्ये जननं नित्ये ३४-७१
अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् २८
अनीकसाहपुरुषः ५५
अनुकूलस्य सङ्कल्पः ५२
अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ५६
अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ५६
अन्तवत्तु फलं तेषाम् ५७
अन्यदेवेषु या भक्तिः ९७
अन्यं देहि वरं देव ९५-९९
अन्योऽसावन्योऽहमस्मि ७
अपाणिपादो जवनो ग्रहीता ३३
अपि चेत्सुदुराचारः ७-६९
अभाग्यं परमं चैतत् १०४
अभिषिक्तं हरेर्यस्तु ९३
अयुक्तमस्मानेवं ९५
अरुणं रजनीचूर्णम् ९३
अरूपवदेव हि तत्प्रधानत्वात् ३२-८७
अर्चायामेव हरये ४१
अवजानन्ति मां मूढाः ३४-४१-१०४
अविनाशी वा अरे अयमात्मा ३२
अविश्वासो न कर्तव्यः ११०
अव्यक्ताव्यक्तयः १२
अव्यक्तोक्षर इत्युक्तः १२-७७
अस्ति भाति प्रियं ५६
अस्थूलमनणु ३२
अहमेव स्वयं वदामि २६
अहमेवासमेवाग्रे ५९-७१
अहं कृत्स्नस्य जगतः ७६
अहं कैलासनिलयम् १०४
अहं ध्यायामि तं विष्णुं ६४
अहं मानुषयोनिस्थः ९५
अहं यथावदाराध्यः १०५
अहं सनत्कुमारश्च ६७
अहो पुंसां महामोहः १०३
अहो बकीयं १३

आ

आचार्यं मां विजानीयात् ४५
आत्मत आविर्भावतिरोभावौ ५९–७४
अत्मनस्तु कामाय सर्वं प्रियं भवति ८
आत्मानं च ततो दद्यात् ७९
आत्मारामोनया वृत्त्या ४०
आत्मा वारे दृष्टव्यः २८–७०
अत्मैवेदमग्र आसीत् ९८
आदाय वैष्णवक्षेत्रात् ९२
आदिदेवो जगन्नाथः ९८
आनन्दमयोऽभ्यासात् ३२–८१
आनन्दमात्रकरपादमुखोदरादिः ३२
आनन्दाद्धेव खल्विमानि भूतानि ३२
आनन्दो ब्रह्मेति व्यजानात् ३२–५६
आप्तकामः ९६
आब्रह्मभुवनाल्लोकाः ५७
आयुष्कामोथवा राजन् ८९
आराध्य पशुभर्तारम् १००
आलस्यं हि मनुष्याणाम् ६५
आवां तवाङ्गसम्भूतौ ११०
आविवेशांशभागेन ३४
आवृत्तिरसकृदुपदेशात् ७८
आसीनो दूरं व्रजति ३२

इ

इति व्रतफलं श्रुत्वा ६५
इदमाह पुरास्माकम् ७५
इदमेव हि माङ्गल्यम् १०४
इदं शिरोव्रतम् १०१
इदं हि विश्वं भगवानिवेतरो ६०
इयदामननात् १३
इषे त्वोर्जेत्वा ९४
इष्टा पूर्तेन मामेव

ई

ईशस्त्वं सर्वदेवानाम् ८३
ईशस्त्वं सर्वभूतानाम् ८५
ईशावास्यमिदम् ५३
ईशोऽहं सर्वदेहिनाम् ११०
ईश्वरः शर्व ईशानः ३५
ईश्वरः सर्वभूतानाम् ९

उ

उत्तमः पुरुषस्त्वन्यः १२
उत्सवे वासुदेवस्य ९२
उद्वेगः प्रतिबन्धो वा १२
उपविष्टं दर्भमय्यां ६५
उपादानं प्रपञ्चस्य ८५
उभयव्यपदेशात्त्वहिकुण्डलवत् ८५

ऊ

ऊर्ध्वपुण्ड्रमृजुं सौम्यम् ९२

ऋ

ऋतेर्थं यत्प्रतीयेत ७१

ए

एकमेवाद्वितीयम् ५१, ६०, ६३, ९८, १०७
एकयोक्त्या ४४
एकं शास्त्रं देवकीपुत्रगीतम् ११३
एकां रुद्रा यजन्ति ६३
एको ह वै नारायणः ९८
एतदेव हि विज्ञानम् ८६

एतन्मतं समातिष्ठ
एतस्य वाक्षरस्य ५०
एतस्यैवानन्दमयस्य ३२-१०७
एतावदेव जिज्ञास्यं ७२
एतावानस्य महिमा २१
एतावान्साङ्ख्ययोगाभ्याम् २९
एवं धर्मैर्मनुष्याणाम् ४२-४६
एष गच्छामि पुत्रार्थम् ९१
एष वो मोक्षदाता च ८१
एष सर्वेश्वरः ६२
एष साक्षाद्धरेरंशः ६२

ऐ

ऐश्वर्यस्य समग्रस्य ३-५१

ओ

ओमित्येतदक्षरमिदम् ६३
ॐतत्सदितिनिर्देशः ११-६३
ॐनमो भगवते महापुरुषाय ८८

क

कथमसतः सज्जायेत २०
कदाचित्पर्वते रम्ये ९१
कर्मनिर्मूलनक्षमाम् ९१
कलौ रुद्रो महादेवः १०५
कामदेवाय विद्महे ५२
काम्यानां कर्मणां ४७
काव्यादीनामसत्यत्वात् ६२
किं तद्रूपं किं भजनम् ३६
किं तपस्यसि कल्याणि १०२
किमासनं ते गरुडासनाय १५-८६
कीटः पेशस्कृतं ध्यायन् ५
कुसुमं कौशीतक्याः ४४
कृषिर्भूवाचकः शब्दः ३-८७
कृष्णो ब्रह्मैव शाश्वतम् ८
कृष्णो वै परमं दैवतम् २२
केचित्केवलया भक्त्या २२
केन व्रतेन संतुष्टः ६३
केवलेन हि भावेन २९
क्रीडस्यमोघसङ्कल्प ७१
क्रीडाज्ञानं भगवच्छिक्षितम् ७१
क्रीडार्थमात्मन इदम् १५-४६-५१
क्षेमा स्यात्किमुविश्वेशे १०९

ग

गगनाद्वां पतन्तीम् १७
गणितानन्दकं वृहत् १३
गुशब्दस्त्वन्धकारः स्यात् १४
गोपीजनवल्लभविज्ञानेन २२
गोपीजनवल्लभाय स्वाहा ६९
गोपीनां तत्पतीनां च १०८
गोप्यो गावो ऋचस्तस्य २५
गोविन्दान्मृत्युर्बिभेति २५

च

चतुर्भुजश्च वैकुण्ठे ३१
चतुर्भुजं शङ्खचक्र- ३१
चतुर्मुखादीनां सर्वेषामपि ११०
चिन्तनं वासुदेवस्य ८०
चिन्तयन् चेतसा कृष्णम् २९-३०-८१
चूतप्रवाल- ३५
चेतस्तत्प्रवणं सेवा ४७
चैद्याय मार्पयितुम् १०२

छ

छादयामि जगत्सर्वम् ५३

ज

जन्म कर्म च मे दिव्यम् ३४–९७
जन्माद्यस्य यतः शास्त्रयोनित्वात् १२
जय विश्वमहादेव ६१
जानामि धर्मं न च मे प्रवृत्तिः ३
ज्ञानं परमगुह्यं मे ७१
ज्ञानं यदा तदा प्रतिनिवृत्तः ८१
ज्ञानं विशुद्धं विपुलम् ३९

त

त एव साधवः साध्वी ४१
तज्जन्म तानि कर्माणि ११–१०४
ततः संसारदुःखस्य ९
ततस्तुष्टः १०२
ततो विशेषं प्रतिपद्य निर्भय-
स्तेनात्मनापः ३७
ततो वै सदजायत ५६
तत्सृष्ट्वा तदेवानुप्राविशत् ५४–५६
तत्सृष्ट्वाथ उपास्ते २१
तथा प्राणाः ४८
तथापि नाथमानस्य ७१
तथाप्यासुरमोहार्थं ९७
तथा भवाम्यहं विष्णो ९०
तदस्माकं गुरुस्त्वं हि १७
तदा ब्रह्मा तयोर्मध्ये १०८
तदेजति तन्नैजति ३३
तदेतदक्षयम् ७४
तन्त्वौपनिषदं १४
तन्मनोऽसृजत ४९
तन्मनस्कास्तदालापाः १८
तमद्भुतं बालकम् ३१
तप आतिष्ठ भद्रं ते ७५
तमुस्तोतारः ९
तमेव भान्तमनुभाति सर्वम् ३४–५६–
६०–११०
तमेव विदित्वा १८
तमेव शरणं गच्छ ९
तव कथामृतम् ४
तव वरद ६५
तस्माद्भारत सर्वात्मा २७
तस्मा एतां ब्रह्मविद्यां ९१–१००
तस्मान्मायामेताम् २५
तस्मिंस्तनं १०७
तं यथायथोपासते ४९
तानाविदन् ४८
तां वै प्रवयसो बालाम् १०१
ते तु ब्रह्महृदं नीताः ५
ते देशास्ते जनपदाः १६
ते ये शतं प्रजापतिलोक आनन्दाः १३
ते ये शतं प्रजापतेरानन्दाः १३
तेषां सततयुक्तानाम् ६६–८८
तेषामहं समुद्धर्त्ता ६९
त्वय्यग्र आसीत् ५०
त्वयाऽसौ कः स्तुतः ६१
त्वं च मे वरदो भव ९५
त्वं च रुद्र महाबाहो ९४
त्वं नः परमकं दैवम् १७
त्वं हि नः पिता १४
त्वामाराध्य ९५–१०५

द

ददर्श तत्राखिलसात्वताम् ७

दृदामि बुद्धियोगं तम् ९
ददृशुः शिवमासीनम् ६५
दशचन्द्रमसिं रुद्रः ६२
दाराः पुंभूम्नि ४५
दिनेष्टमे तु विप्रेण ९१
दिवो दानाद्वा ६
दिव्याः पाशुपताः सर्वे ९०
दिव्यं वर्षसहस्रम् ७०
दिव्यो ह्यमूर्तः पुरुषः ३३–१०३
दुर्भगाया न मे धाता १०१
दृष्ट्वा देवं जगद्योनिम् ६२
देवकार्यावतारेषु ९४–९५–९९
देवक्यां देवरूपिण्याम् ३५–५३–५५
द्यौः क्षितिः सर्वभूतानि ६२
द्रक्ष्ये दितिजसङ्घानाम् ९१
द्वापरादौ युगे भूत्वा ९५
द्वे वने स्तः कृष्णवनं भद्रवनम् ६२

ध

धर्मार्थकामकेयूरैः ३४
धात्वर्थ उत्तमा सेवा ३
धावन्निमील्य वा नेत्रे ९
धुनोति सर्वं हृदि सन्निविष्टः २३
धृतिः क्षमा दमोऽस्तेयम् ५७

न

न गतिः कर्मणां शक्या ९०
न तत्र रथा न रथयोगाः ८४–८५
न तत्समश्चाभ्यधिकश्च ५४–८३
न तथा मे प्रियतम— २३
न तथा ह्यघवान् राजन् १०६
न तस्य कार्यं करणं च विद्यते १४
न ते भवस्येश भवस्य कारणम् ३४–६६
न नाकपृष्ठं ४६–४८
नन्दाद्या ये व्रजे गोपाः ५९
न पारयेऽहम् ६
न प्रयोजनवत्वात् ९६
नमः सहस्रशिरसे १०३
नमश्चकार तुष्टात्मा ६१
नमस्ते विश्वरूपाय ८६
नमस्ये त्वाम्बिके १०१
न मे पार्थास्ति कर्तव्यम् ९७–१०५
नमो किञ्चनवित्ताय ८१
नमो ब्रह्मण्यदेवाय १०३
न युज्यमानया भक्त्या ४१
न योगसिद्धीरपुनर्भवं वा ८०
नवद्वारं पुरं पुण्यम् ७२
न स्त्रियो व्रजसुन्दर्यः २५
नाकस्य पृष्ठे ५९
नामरूपे सत्यम् ५६
नायमात्मा प्रवचनेन लभ्यः १०२
नायमात्मा बलहीनेन लभ्यः ९
नारायणस्तु सर्वेषाम् १०२
नारायणादक्षयात् १७
नारायणाय शुद्धाय ६१
नारायणो वा इदमग्र आसीत् ५९
नार्जुनेन समः ९१–१०५
नाहं परायुर्ऋषयः ६७
नाहं वेदैर्नतपसा ९
नित्यो नित्यानां ५८
निर्दोषश्चेत्कथं शम्भुः ९६
निःश्वसितमस्य वेदाः २१

निष्कलं निष्क्रियं शान्तम् ३२
निसर्गसर्गनिरत— ६१
नैर्गुण्यस्था रमन्तेस्म ३७

प

परं ब्रह्मैतद्यो धारयति २८
परामिध्यानात्तु तिरोहितम् ५
परोक्षप्रिया हि देवाः ९
परोमदन्यो जगतस्तस्थुषश्च १८
परिनिष्ठितोऽपि नैर्गुण्ये ३७
पश्यन्ति ते मे ४४
पादयोररविन्दं च ६२
पुत्रार्थं भगवांस्तत्र ९०
पुत्रार्थिनीमामुपेत्य ९१
पुनश्च कथयिष्यामि ४२
पुरुष एवेदं सर्वम् ८६
पुरुषः पुष्कलः पुण्यः ६१
पुरुषः स परः पार्थ ७-९-५८-६९
पुरुषो वै नारायणः ७५-७६
पूरणात् सदनाच्चैव ७२
पूर्णमदः पूर्णम् २०-८४
पूर्णानन्दो हरिः १३
प्रकृतैतावत्त्वं प्रतिषेधति १३
प्रज्ञानं ब्रह्म ५६
प्रतत्ते अद्य ५५
प्रथमां मथुरां रम्याम् ६३
प्रपञ्चोपशमं शान्तम् ६२
प्रवणं क्रमनिम्नोर्व्यां ४७
प्राणायामोसि सर्वेषु १०३

ब

बर्हापीडं नटवरवपुः ८७
बर्हायिते ते नयने नराणाम् ६
बीजं मां सर्वभूतानाम् ७६
बुद्धिप्रेरककृष्णस्य ३
ब्रह्मभूतः प्रसन्नात्मा ९
ब्रह्मसम्पद्यते २९
ब्रह्मा देवानाम् १०१
ब्रह्मा भवश्च तत्रैत्य ६८
ब्रह्मा विष्णुरनन्तश्च ९१

भ

भक्तवत्सलः स्वयमेव ११६
भक्तावत्यादरेणैव ७९
भक्तियोगं स लभते ४०
भक्तियोगो निरुपद्रवः १११
भक्तिः सिद्धेर्गरीयसी ४९-८०
भक्तिस्त्वप्युपयुज्येत ४१
भक्त्यामाम् १०-४४-६७ ७७
भक्त्या सञ्जातया ४२
भगवच्चरणाम्भोज— ९२
भगवच्छिक्षितमहं करवाणि ७१
भगवन्देवदेवेश १०४
भजे भजन्या— ८८
भद्रं कर्णेभिः १०४
भर्ता सन् भ्रियमाणः ९८
भवताभिहितः स्वामिन् ४०
भवानीनाथ स्त्रीगणाबुर्द— ८८
भस्म वै परमं पुण्यं ८९
भीषास्माद्वातः पवते १११
भूत्यै न प्रमदितव्यम् ८९

म

मच्चित्तः सर्वदुर्गाणि १०

मत्पादसेवाभिरताः ४४
मत्प्रसादान्मनुष्येषु ९०
मत्सेवया प्रतीतं च ४३
मत्स्थानि सर्वभूतानि १२
मदर्पणं निष्फलं वा ४०
मद्भक्तः प्रतिबुद्धार्थो ८१
मद्भक्तो भव नित्यं त्वम् १००
मधुद्विट्सेवानुरक्तमनसाम् ४३
मन्मना भव मद्भक्तः ११-६०
मम योनिरप्स्वन्तः समुद्रे २७-४९
ममैवांशो जीवलोके ५-८-४६
मया ततमिदं सर्वम् १२
मया सृष्टः पुरा ब्रह्मा १६
मयि सञ्जायते भक्तिः ४२-४९
मय्येव मन आधत्स्व ८०
मर्त्यो मृत्युव्यालभीतः १८
महतः परमव्यक्तम् १०३
महेश्वरस्त्र्यम्बक एव नापरः ६०
मामेव ये प्रपद्यन्ते ५-५३
माविद्या च हरेः १११
मात्स्यं कौर्मम् १०२
मां य उपासिता ४१
मां हि पार्थ व्यपाश्रित्य २३
मुकुन्दलिङ्गालयदर्शने ६
मुक्तिर्हित्वान्यथारूपम् ४६
मुक्तिं ददाति कर्हिचित् ४९-८०
मुक्तोपसृप्यव्यपदेशात् ४६-४९-८०
मृत्योः स मृत्युमेति २१

य

यः प्राणेषु तिष्ठन् ३४
यः सर्वाणि भूतान्यन्तरः ३४
यच्च किञ्चित् ३५
यतोऽयं पूर्वेषामपि पूर्वजः ९९
यतो वा इमानि भूतानि २१-४६
८४-९८
यतो वाचो निवर्तन्ते १३-७२
यत्करोषि यदश्नासि ४७
यत्तत्परं भविष्यं च ६१
यत्तत्पद्मभूत्पूर्वम् १००
यत्पादमूलमुपसृत्य ८८
यत्पादसेवा १६
यत्सङ्कल्प— ४८
यथाग्नेः क्षुद्राः ४-११-५८
यथा यथात्मा परिमृज्यतेऽसौ ४०
यथा सैन्धवखिल्यमुदके ५८
यथा हिरण्यं बहुधा समीयते ८०-८५
यथैकेन मृत्पिण्डेन १९
यथोर्णनाभिर्हृदयात् ८६
यदवात्पंचमे पूर्वम् ९१
यदिदं मनसा वाचा ५८
यदिवस्तत्र सन्देहः १०९
यदेव विद्यया करोति ४७
यद्गत्वा न निवर्तन्ते ५७
यद्यदाचरति श्रेष्ठः ९४
यद्धिया त उरुगाय— ८४
यद्यनीशो धारयितुम् ४०
यस्य देवे परा भक्तिः ४५
यस्याङ्घ्रिपङ्कज— १०२
यस्यान्तःस्थानि १२
यस्यामेव कवयः ४९
यस्यावतारकर्माणि ११२

यस्मात्क्षरमतीतोहम् ३५
यं मामपृच्छत्समुपेत्य ६७
यागो दानं जपो होमः ९२
या प्रीतिरविवेनाम् ३९
यावत्सखा ७१
यावानहं यथा भावः ७१
या वै लसच्छ्रीतुलसी १६
याः पर्यचरन् १०९
ये तु सर्वाणि कर्माणि ३७–६५
येन्येरविन्दाक्ष १०४
ये यथा मां प्रपद्यन्ते ४९–६८
यो दुस्त्यजान् ४९
यो मनसि तिष्ठन् ३५–१११
योगास्त्रयो ३९
यो मामजमनादिं च ६१
यो भजेत समाहितः ४१
यो यदंशः स तं भजेत् ५
यो यो यां यां तनुं भक्तः ५७
यो वै भूमा तत्सुखम् ६०
योऽसौ नारायणो देवः ९०–९८
योह खलु वा वै तस्यांशः ५

र

रतिर्देवादिविषया २३
रमन्ते योगिनोनन्ते ८८
रसं ह्येवायं लब्ध्वा ३२
रसो वै सः ३२
रहूगणैतत्तपसा न याति १०
रुद्राणामहमेवासम् १०५
रूढियोंगमपहरति १०१

ल

लोकनाथ परानन्द ९०
लोकयात्राविधानार्थम् ९९
लोकवत्तु लीलाकैवल्यम् ९९

व

वंशस्तु भगवान् रुद्रः १०५
वरं वृणीष्व भद्रं ते ८१
वसुर्विष्णुर्विष्णुर्वसुः ५३
वासुदेवः सर्वात्मा ८
वासुदेवे मनो युञ्जन् ८०
वासुदेवो वा इदमग्र आसीत् ५४–५९
विज्ञानं ब्रह्म ८६
विदाम न वयं सर्वे ११२
विद्याकामस्तु गिरिशम् १०२
विद्याविद्ये मम तनू ३७
विद्येश्वरीरुद्रशतरुद्र- ६४
विना भस्मत्रिपुण्ड्रेण ८९
विप्रशापः कथमभूत् ५९
विश्वाधिको रुद्रो महर्षिः ६३–६४
विष्णोराराधनार्थं मे ६४
विष्टभ्याहमिदम् ३४
वेदवेद्यस्वरूपाय १०३
वेदे रामायणे चैव ५५
वेदैश्च सर्वैरहमेव वेद्यः १०३
वैकुण्ठनगरात्काशीम् ९१
वैष्णवानां यथा शम्भुः ८९
वैदिकी तान्त्रिकी दीक्षा १
वैन्यस्य दक्षिणे हस्ते १२
वैराग्यं साङ्ख्ययोगौ च ३०
व्यतिरेको गन्धवत् ४८
व्यस्तभ्रारोदसि ३४

श

शक्तिशक्तिमतोरभेदः २६

शिपिविष्टस्तु ५५
शिपिविष्टेति चाख्यायाम् ५५
शिव एव हि जन्तूनाम् ७९
शिवमद्वैतं चतुर्थं मन्यन्ते ६३
शिवेन विष्णुना चैव ८९
शृणु विष्णो प्रवक्ष्यामि ६३
श्रद्धामृतकथायां मे ४२
श्रद्धावान् भजते यो माम् ३९
श्रवणं कीर्तनं विष्णोः २७-५०-११३
श्राद्धे यज्ञे जपे होमे ९
श्रियः पतिर्यज्ञपतिः प्रजापतिः ८६
श्रिया पुष्ट्या गिरा कान्त्या २५
श्रीवत्सलक्ष्मम् ३५
श्रुतत्वाच्च २१
श्रुतिं चकाराच्युतसत्कथोदये ४
श्रोणामेकमुदकम् ९३

ष

षोडशकलोऽयं पुरुषः १०७

स

स आत्मा स विज्ञेयः ६३
स ईक्षाञ्चक्रे ५६
स ईश्वरः किं परतो व्यपाश्रयः १४
स एष शाश्वतो देवः ६१
सकृदेव प्रपन्नाय १०६
सकृदेव प्रपन्नो यः १०६
सकृदेव प्रपन्नोऽस्मि ४२
सच्चिदानन्दत्वमेव परब्रह्मत्वम् १२
सच्चिदानन्दरूपाय ८३-८६
स च मे दास्यते पुत्रम् ९१
स तपस्तीव्रमातस्थे ९०
सत्यं ज्ञानमनन्तं ब्रह्म ६०
सत्यव्रतं सत्यपरम् ६८
सत्याद्धर्माच्च कुशलात् ८९
सत्त्वं रजस्तम इति २२-३९
सत्त्वं विशुद्धम् ५३-८२
सत्त्वेन प्रतिलभ्याय ८१
सत्सङ्गलब्धया भक्त्या ४०-४१
सदेव सौम्येदमग्र आसीत् ५६
सन्ध्ये सृष्टिराह हि ८५
सन्तुष्टः सततं योगी २३
सन्मूलाः सौम्येमाः प्रजाः १९-८५
सपत्नीकाद्यदुश्रेष्ठ ९१
सपर्यगात् ३२
सर्वज्ञस्त्वं न सन्देहः ९४
सर्वत्रासौ समस्तं च ५३
सर्वधर्मान्परित्यज्य ४२-५४
सर्वस्य वशी सर्वस्येशानः ८५
सर्वं खल्विदं ब्रह्म २०-५६-५९-८६
सर्वं मद्भक्तियोगेन ५४
सर्वं ह्येतद्ब्रह्मायमात्मा
सर्वाधिको रुद्रो महर्षिः ६३
सर्वानन्दमयस्यापि ७९
सर्वे वेदा यत्पदमामनन्ति ५५-१०३
सर्वेषामधिकारिणामनधिका-
रिणां वा ७
स वै मनः कृष्णपदारविन्दयोः ४
स वै सर्वमिदं जगत् १५-५६-५८-८६
स सर्वधीवृत्त्यनुभूतसर्वः १४
स सर्वं भवति १५-५८-८६
सहस्रमूर्ते १०३
सहस्रशीर्षं देवम् ६२

| | |
|---|---|
| सहस्रशीर्षा इत्यत्र | २४ |
| सहस्रशीर्षा पुरुषः | १०३ |
| सहैतावानास | १५–५६ |
| सङ्क्रन्दनोदुश्च्यवनः | ७० |
| सङ्गः सर्वात्मना त्याज्यः | ७६ |
| साक्षी चेता | ७९ |
| सात्त्विको विष्णुः | ८० |
| सामानाधिकरण्यं हि | ९६ |
| सालोक्यसार्ष्टि– | ४८ |
| सुरासुरगुरो | १०० |
| सूर्याचन्द्रमसौ धाता | ७४ |
| सेयं गुणमयी माया | ६७ |
| सोऽश्नुते सर्वान् कामान् | ६–७९ |
| स्तुतिप्रियो विष्णुः | ७० |
| स्त्रीपुंमलानुषङ्गात्मा | ९६–९७ |
| स्नात्वा पुण्ड्रं मृदा कुर्यात् | ९३ |
| स्मृतेश्च | १०१ |
| स्वपादमूलं भजतः | २३ |
| स्वागतं पुण्डरीकाक्ष | १०० |
| स्वाध्यायस्य | १०१ |
| स्वाहेत्यनेनेदं संसरति | २३ |
| स्वेच्छयावतीर्णोऽपि | ९९ |

ह

| | |
|---|---|
| हरिणा ये विनिर्मुक्ताः | ७७ |
| हरिर्हि निर्गुणः साक्षात् | २२–३२ |
| हारिद्रेणैवारुणेनैव | ९२ |
| हृगृहोर्भच्छन्दांसि | ९३ |
| हृतात्मानो हृतप्राणान् | ५०–८० |
| हृषीकेशोऽहमीशानः | ३ |

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अभेकै | अनेकै | २ | १० |
| वरान् | वरा | २ | १२ |
| रक्षण | रक्षणसाधन | ४ | १३ |
| तत्साम्यतां | तत्सात्म्यतां | ५ | १४ |
| आनन्दपदस्यार्थः, | आनन्दपदस्य, | ८ | ११ |
| द्रुहिलतया | गृहिलतया | ८ | १४ |
| महत्ते | महस्ते | ९ | १४ |
| विद्यादि | विध्यादि | ९ | १८ |
| स्वाप्नं | न | १० | ११ |
| यातीति | याति | १० | ११ |
| यत् यत | यत | ११ | ८ |
| सेवामनन्यवृत्त्या | सेवायामनन्यवृत्त्या | ११ | ११ |
| कला | फला | ११ | ११ |
| सत्तिरोहितस्य | तद्रहितस्य | ११ | १९ |
| तन्वौपनिषदं | तन्त्वौपनिषदं | १४ | १७ |
| कर्त्तेति | कर्त्र इति | १४ | १९ |
| कामादौ | कल्पादौ | १५ | २० |
| पर्वान्तीय | पर्वान्तरीय | १७ | १६ |
| मृद्विकारित्व | मृद्विकारत्व | २० | ३ |
| गायस्यैव | गमस्यैव | २० | ६ |
| प्रेरकाः | प्रेरकः | २५ | १ |
| तत्र | तत्रा | २५ | ७ |
| योविद्वान् | योविद्वान् जानाति सः | २६ | १७ |
| स्वस्वरूप | स्वरूप | २७ | २० |
| सिद्धान्त | सिद्धाना | २८ | ९ |
| समुदितान्त | समुदिताना | २८ | २१ |
| इत्यदिः | इत्यादिः | २८ | २५ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| हरत्यादिषु | रंसतीत्यादिषु | २९ | ६ |
| तारणा | तार्णा | २९ | २३ |
| गोपालवेश | गोपवेश | ३० | २२ |
| युक्त | युक्तः | ३४ | २ |
| भूतेभ्योन्तरे | भूतेभ्योन्तरो | ३४ | ८ |
| यज्ञोपवीतततन्तुभिः | यज्ञोपवीतं तन्तुभिः | ३५ | ४ |
| अथ | अत्र | ३५ | ९ |
| कारि | कारं | ३६ | ६ |
| र्मविशिष्टा | धर्मविशिष्टा | ३६ | ११ |
| मनोनिवेशन | मनोर्निवेशन | ३७ | १६ |
| प्रेमपूरसमृदिति | ० | ३७ | १९ |
| निर्गुण्यस्था | नैर्गुण्यस्था | ३७ | २२ |
| वृत्ति | वृत्त्या | ४० | २२ |
| अथ | अयं | ४१ | १२ |
| र्बाह्य | र्बहिः | ४७ | ३ |
| कृषू | कृपू | ४७ | ४ |
| भगवदीत्वेनेति | भगवदीयत्वेनेति | ४८ | २६ |
| शयन्तं | क्षयन्तं | ५५ | १५ |
| समाधि | समाधिक | ५६ | ३ |
| त्वसो | त्वस्यो | ५७ | १७ |
| सुतः | स्तुतः | ६१ | ८ |
| नाम्ना | नाम्नां | ६१ | १८ |
| मातृत्वेन | ध्यातृत्वेन | ६४ | १३ |
| कपिलोप्या | कपिलोऽपा | ६७ | १३ |
| तस्याखिल | तस्माखिल | ७० | २० |
| सम्पातारात | सम्पातत्त | ७३ | ३ |
| सर्वदोगुणद्रष्टा | सर्वद्रगुणद्रष्टा | ८० | १० |
| तस्याः | तस्या- | ८२ | ८ |
| नियामकायेति | नियामकत्वमाहेति | ८५ | २३ |

